श्रीः

महाकवि-विद्यापति-ठक्कुर-प्रणीता

# दुर्गाभक्तितरङ्गिणी


काशीनाथमिश्रः,

सम्पादको हिन्दीभाषानुवादकश्च

कुलपतिः

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयस्य






कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः

कामेश्वरनगरम्, दरभङ्गा (बिहार)

## —:: ग्रन्थ-परिचय ::—

श्री दुर्गाभक्तितरङ्गिणी मैथिल महाकवि एवं स्मार्त्त-निबन्धकार विद्यापति (1350-1440 AD) की अन्तिम संस्कृत रचना है। इस पुस्तक में शाक्तागम-पुराणादि-प्रोक्त शारदीय दुर्गापूजा की विधि का सविस्तर निरूपण प्राप्त होता है। प्रमाण-तरंग और प्रयोग-तरंग के भेद से इस पुस्तक के दो भाग हैं। इसकी रचना विद्यापति ने मिथिला नरेश धीरसिंह के राज्यकाल में पूरी की थी। शाक्तागम और पुराणादि में वर्णित दुर्गापूजा की विधि के जिज्ञासुओं के लिए यह पुस्तक अतीव उपादेय है। इसका प्रथम संस्करण राज प्रेस, दरभंगा से हुआ था जो सम्प्रति सुलभ नहीं है। अतः वर्त्तमान संस्करण पटना विश्वविद्यालय के पूर्व संस्कृत विभागाध्यक्ष प्रो. काशीनाथ मिश्र द्वारा प्रस्तुत हिन्दी भावानुवाद के साथ कामेश्वर सिंह दरभंगा संस्कृत विश्वविद्यालय द्वारा प्रकाशित किया जा रहा है।

॥ श्रीः ॥

महाकवि-विद्यापति-ठक्कुर-प्रणीता

# दुर्गाभक्तितरङ्गिणी


*काशीनाथमिश्रः,*

सम्पादको हिन्दीभाषानुवादकश्च

*कुलपतिः*

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयस्य





**कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः**

**कामेश्वरनगरम्, दरभङ्गा (बिहार)**

|| श्रीः ||

# निवेदनम्

वन्दे दुर्गां महामायां महिषघ्नीं त्रिशूलिनीम्।
भक्ताभयप्रदां देवीं सर्वापद्विनिवारिणीम्।।

महता प्रमोदभरेण समं सातिशयसौभाग्यभाजनानां देवीसपर्यानिरतानां जिज्ञासूनाञ्च पुरतो विनिवेद्यते यदियं मैथिलस्मार्त्तकर्मानुष्ठाननिष्ठस्य काव्यशास्त्रोभयनिष्णातस्य कविशेखरविरुदभाजः क्रैस्तचतुर्दशशतक-समुद्भवस्य विद्यापतिठक्कुरस्य शाक्तागम-पुराणोपवर्णित-शारदीय-दुर्गापूजाविधिविषयिनी दुर्गाभक्तितरंगिणीसमाख्या नितरां महत्त्वपूर्णापि पुनर्मुद्रणाभावाद् दौर्लभ्यमुपेता कृतिः साम्प्रतं विश्वविद्यालयानुदानायोगप्रदत्तं वित्तसाहाय्यमवलम्ब्य कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयेन प्राकाश्य-मुपनीयत इति।

ग्रन्थस्यास्य प्रारम्भे मंगलश्लोकयुग्मं क्रमशो गणपतिनमस्कारात्मकं समुचितेष्टदेवताविषयकञ्चोपनिबध्य महाराजस्य धीरसिंहस्य तदनुजस्य भैरवसिंहस्य च प्रशस्तिकीर्त्तनपुरस्सरं प्रकृतग्रन्थनिबन्धनार्थं मिथिलेश्वरेण कृता विज्ञापना च व्यावर्णिता महाकविना। तद्यथा -

अभिवाञ्छितसिद्ध्यर्थं वन्दितो यः सुरैरपि।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः।।१।।

भक्त्यानम्रसुरेन्द्रमौलिमुकुटप्राग्भारतारस्फुरन्
माणिक्यद्युतिपुञ्जरञ्जितपदद्वन्द्वारविन्दाश्रयः।।
देव्यास्तत्क्षणदैत्यदर्पदलनासंवित्प्रहृष्टामर-
स्वाराज्यप्रतिभूभविष्णुकरुणागम्भीरदृक् पातु वः।।२।।

अस्ति श्रीनरसिंहदेवमिथिलाभूमण्डलाखण्डलो
भूभृन्मौलिकिरीटरत्ननिकरप्रत्यर्चिताङ्घ्रिद्वयः।
आपूर्वापरदक्षिणोत्तरगिरिप्राप्तार्थिवाञ्छाधिक-
स्वर्णक्षोणिमणिप्रदानविजितश्रीकर्णकल्पद्रुमः।।३।।

विश्वख्यातनयस्तदीयतनयः प्रौढप्रतापोदयः
संङ्ग्रामाङ्गणलब्धवैरिविजयः कीर्त्याऽप्तलोकत्रयः।
मर्यादानिलयःप्रकामविनयः प्रज्ञाप्रकर्षाश्रयः
श्रीमद्भूपतिधीरसिंहविजयी राज्यमोघक्रियः।।४।।

शौर्यावर्जितपञ्चगौडधरणीनाथोपनम्रीकृता-
नेकोत्तुङ्गतुरङ्गसङ्गतसितच्छत्राभिरामोदयः।
श्रीमद्भैरवसिंहदेवनृपतिर्यस्यानुजन्मा जयत्या
चन्द्रार्कमखण्डकीर्तिसहितः श्रीरूपनारायणः।।५।।

देवीभक्तिपरायणः श्रुतिमुखप्रारब्धपारायणः
सङ्ग्रामे रिपुराजकंसदलनप्रत्यक्षनारायणः।
विश्वेषां हितकाम्यया नृपवरोऽनुज्ञाप्य विद्यापतिं
श्रीदुर्गोत्सवपद्धतिं स तनुते दृष्ट्वा निबन्धस्थितिम्।।६।।

अथात्र ग्रन्थे तरंगद्वितयप्रविभक्ते विन्यस्तानां विषयाणां परिचयार्थं समासतस्तेषां समुल्लेखो विधीयते। तत्र प्रथमे प्रमाणतरंगे देवीपूजागृह-निर्माणम्, प्रतिमालक्षणम्, चण्डिकारूपकथनम्, चामुण्डारूपकथनम्, सर्वमंगलारूपकथनम्, प्रतिमाभ्यंगव्यवस्था, सामान्यार्घस्वरूपम्, जपहोमो-पयोगिमन्त्रनिर्देशः, गन्धपुष्पाक्षतदानविधिः, पूजोपचारः, देवीपूजने विहितपुष्पाणि, धूपदीपनैवेद्यदानविधिः, शारदीयदेवीमहोत्सवपूजाविधिः, आश्विनकृष्णनवम्यादिपूजाकल्पः, आश्विनशुक्लप्रतिपदादिपूजाकल्पः, प्रतिपदादिप्रतिदिनकृत्यम्, षष्ठयादि पूजाविधानम्, सप्तम्यादिपूजाविधानम्, तिथिनक्षत्रबलावलविचारः, तिथिद्वैधव्यवस्था, प्रतिपदि यजमानस्नापनाय शान्तिकलशस्थापनविधिः, स्वस्त्ययनविधिः, देवीमाहात्म्यश्रवणकीर्त्तनम्, द्वितीयादिरेवन्तादिपूजा, गजपूजनम्, षष्ठ्यां बिल्वाभिमन्त्रणम्, सप्तम्यां

पत्रिकाप्रवेशनविधिः, महाष्टमीकृत्यम्, महाष्टमीमहानवम्योर्नवदुर्गार्चनविधिः, सर्वमंगलापूजाविधिः, उग्रदण्डापूजनम्, दशभुजापूजनम्, चतुःषष्ठिदेवी-श्रीविग्रहवर्णनम्, महानवमीकृत्यविधिः, त्रिशूलिनीपूजा, मातृचक्रार्चनम्, कुमारिकापूजा, बलिदानविधानम्, नीराजनम्, शालिहोत्रीयतुरगनीराजनविधिः, स्वातीसम्पातशान्तिः, यात्रामहोत्सवविधिरित्येतेषां विषयाणां समावेशो दृष्यते।

अथ प्रयोगाख्ये द्वितीये तरंगे कलशस्थानम्, कलशे ब्रह्मपूजा, प्रतिपदादि प्रतिदिनं दुर्गापूजाविधिः, अश्वशालायामश्वप्रवेशनविधिः, बिल्वे देवीबोधनामन्त्रणविधिः, पत्रिकाप्रवेशनविधिः, महाष्टम्यां देवीपूजाविधिः, देवीनामसंकीर्तनविधानम्, देवीदर्शनविधानम्, आवरणदेवतापूजनविधिः, मातृकापूजनविधिः, अंगपूजाविधिः, घृताभ्यंग-विरूक्षणानन्तरं पंचगव्य-पंचामृत-चन्दनवारि-सुरभिपुष्पतोय-स्नपनविधिः, अर्घसमर्पणविधिः, अनुलेपनविधिः, पुष्प-बिल्वपत्रसमर्पणविधिः, विहित-विविध-पुष्पग्रथित-माल्यार्पणविधानम्, गुग्गुलु-कृष्णागुरुधूपदानविधिः, दीपदानविधिः, आयसदीपवृक्षस्थ-दीप्तदीपराजिदानविधिः, दीपसंघातदानविधिः, गुडखण्डाज्यसम्मिश्रान्न-गुडसाधित-घृतपक्वान्न-शालिभक्त-घृतशर्करा-सहितपायस-सखण्डघृतपक्वापूप-सखण्डघृतसाधितमोदक-रम्भा-नारिकेलादिफल-केतकीकर्पूरवासितपानीयसपूगताम्बूलप्रभृतिसम्भृतनैवेद्य-समर्पणविधिः, चित्रसूक्ष्मवसन-हेममुकुट-कनकतिलक-कुण्डल-कण्ठाभरण-मुक्ताहाररत्नप्रालम्बिका-कंकणांगुरीयक-केयूर-हेमकांची-नूपुरपादांगुरीय-काद्यलंकरण- प्रदानविधिः, हेमपात्रदानविधिः, घण्टा-वितान-चामर-कनकदण्ड- संगतधवलच्छत्र-दानविधिः, नानावर्णविचित्र-मयूरपक्ष-व्यजनदानविधिः, दुकूल-तूलवस्त्रप्रच्छदपटसमन्वित-रत्नखचित-शय्यादानविधिः, आसन-काष्ठपादुकोपानत्समर्पणविधिः, किंकिणीजाल संवीत-श्वेतपताकोपशोभित-महाध्वजदानविधिः, दुर्गामण्डपनिवेशित-ध्वजमालादानविधिः, चतुर्हस्तदण्डमानपरिमित-भूमिदानविधिः, धान्यादिसस्यदानविधिः, आलक्तकसिन्दूर-सुवर्ण-रत्नदानविधिः, छागादिपशुबलिदानविधिः दुर्गादेव्याः शिरसा प्रणामस्य विधिः, दण्डवत्प्रणामविधिः, देवीस्तुतिविधिः, पुष्पांजलित्रयसमर्पणविधिः,

शस्त्रपूजाविधिः, चामर-च्छत्र-ध्वज-पताका-शंख-सिंहासन-तुरग-पूजनविधिः, माषभक्तबलिदानविधिः, सामान्यबलिदानविधिः, अर्द्धयामिनी-शेषकालिकदेवीपूजनविधिः, नृत्यगीतवादित्रपुरस्सररात्रिजागरणविधिः, महानवमीकृत्ये शूलाकृति-दुर्गापूजाविधिः, ततो महानवम्यां दुर्गापूजाविधिः, छागबलिदानविधिः, महिषबलिदानविधिः, मातृचक्रपूजनविधिः, मातृभ्यः समांसमाषभक्तबलिसमर्पणविधिः, ततः कुमारीपूजनविधिः, दुर्गामाहात्म्य-श्रवणविधिः, होमविधिः, ततो मन्दुरायां रेवन्तपूजाविधिः, ततो विजयदशम्यां देवीविसर्जनम्, देवीश्रीविग्रहमुत्थाप्य तस्य नृत्यगीतवादित्रपुरस्सरं जलप्रवाहणविधिः, ततः पूजास्थानमागत्य दक्षिणादान समनन्तरम् अपराजितापूजाविधिः, ततोऽस्त्रपूजानन्तरं खड्गहस्तेन प्रणवोच्चारण-मुखरमुखेन यजमानेन अनुष्ठेयस्य प्रदक्षिणकृत्यस्यविधिः, अपराजिता-लताधारणविधिः, ब्राह्मणैः शान्तिकलशमुत्थाप्य तज्जलेन यजमानशिरसि अभिषेककृत्यं समन्त्रकं सम्पादनीयम् इत्यभिषेक विधिप्रतिपादनादयो विषयाः सोपस्कारं तत्तत्कृत्योचितसंकल्पवाक्यसमन्विताः समुपलभ्यन्ते। देवीस्तुति-संवलितेनाधस्तनेन श्लोकेन सम निबन्धोऽयं समाप्तिमुपैति।

''कारुण्यैकवशम्वदा प्रणमतो बालानिव त्रायते
भीतिभ्यो धनपंकलिप्तवपुषः प्रक्षालयत्यम्बिका।
संसारे स्खलतः समुद्धरति या मोहान्धकारावृते
साव्याद्वः शरणागतार्त्तिशमनी देवी जगत्पावनी।।'

ग्रन्थेऽस्मिन् प्रमाणरूपेण समुद्धृतेषु आकरग्रन्थेषु देवीपुराणम्, भविष्यपुराणम्, कालिकापुराणम्, ब्रह्मपुराणम्, विष्णुस्मृतिः, गौतमस्मृतिः, कृत्यरत्नाकरः, राजमार्त्तण्डः, गुणिसर्वस्वम्, देवलस्मृतिः, लिंगपुराणम्, गौडनिबन्धः, गर्गस्मृतिः, स्कन्दपुराणम्, शालिहोत्रम्, बृहत्संहिता, शिवरहस्यमित्यादीनामुल्लेखः समुपलभ्यते। सेयं महाकवि-विद्यापतिविरचिता दुर्गाभक्तितरंगिणी मिथिलादेशीयां पारम्पर्यक्रमागतां दुर्गापूजापद्धतिं पुराण-शाक्तागमसिद्धान्तपुरस्सरं व्यवस्थापयन्ती स्थानकृतवैशिष्ट्येन समनुरंजिता सती वंगकामरूपजनपदनिवासिनामपि देवीभक्तिपरायणानां समादरपदं लेभे। तुलुष्काक्रमणकदर्थिते नैराश्यतमश्छन्ने हतोत्साहे

भग्नमनोबले भारतीये जनमानसे दुष्टदानववृन्ददलनार्थं भुवमवतीर्णाया आदिशक्तिस्वरूपिण्याश्चंचन्नानाविध-दिव्यस्त्रास्त्रधारिण्या जगज्जनन्याः सोपचार-महासम्भार-समाराधन-विधानप्रतिपादनमुखेन भारतीय-चेतनायां कापि विलक्षणा सुदूर-प्रसरणशीला परमोत्साहसमुच्छला राष्ट्रोद्धारवासना समुदयं प्रापितानेन निबन्धेनेति सतत्त्वदृशा विचारणायां प्रवर्त्तितायां निबन्धस्यास्य महनीयो महिमातिशयः प्रकामं प्राकाश्यमुपयाति। देवीश्रीविग्रहस्थापनपुरस्सरं श्रीदुर्गापूजनस्य प्रचुरविभवसम्भारसाध्यतया मिथिलायां साम्प्रतं कलशस्थापनादिविसर्जनान्तः पूजाक्रमो निबन्धमिम-मनुसृत्यैव शारदीये नवरात्रोत्सवे श्रद्धाधनैः शाक्तैरनुष्ठीयमानो विलोक्यते।

अत्र यद्यपि निबन्धकारस्य महाकवेर्विद्यापत्तेर्देशकालवंशवृत्तादि-परिचयात्मको निबन्धः संयोजनीय आसीत् तथापि स्वास्थ्यवैमुख्यात् तस्य संयोजनं सम्प्रति शवयक्रियं नैव संजातमिति सखेदमावेद्यते। ग्रन्थस्यास्य मुद्रणे संशोधकप्रमादवशात् संजातानि स्खलितानि कृपया संशोध्य सौजन्यधनाः श्रद्धालवो देवीसपर्यापरायणाः ग्रन्थमिमं दृष्टिपातेन सम्भावयिष्यन्तीति विनिवेद्य विरमति -

अधिदर्भांगनगरम्
श्रावणीपूर्णिमायाम्
वै० २०५७

**काशीनाथमिश्रः**
कुलपतिः,
कामेश्वरसिंहदरभंगासंस्कृतविश्वविद्यालयस्य

।। श्रीदुर्गादेव्यै नमः।।

# अथ दुर्गाभक्तितरंगिण्यां विषयानुक्रमणिका

॥ श्रीः ॥

अभिवाञ्छितसिद्ध्यर्थं वन्दितो यः सुरैरपि।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥१॥

भक्त्यानम्रसुरेन्द्रमौलिमुकुटप्राग्भारतारस्फुर-
न्माणिक्यद्युतिपुञ्जरञ्जितपदद्वन्द्वारविन्दाश्रयः॥
देव्यास्तत्क्षणदैत्यदर्पदलनासंवित्प्रहृष्टामर-
स्वाराज्यप्रतिभूभविष्णुकरुणागम्भीरदृक् पातु वः॥२॥

अस्ति श्रीनरसिंहदेवमिथिलाभूमण्डलाखण्डलो
भूभृन्मौलिकिरीटरत्ननिकरप्रत्यर्चिताङ्घ्रिद्वयः।
आपूर्वापरदक्षिणोत्तरगिरिप्राप्तार्थिवाञ्छाधिक-
स्वर्णक्षोणिमणिप्रदानविजितश्रीकर्णकल्पद्रुमः॥३॥

विश्वख्यातनयस्तदीयतनयः प्रौढप्रतापोदयः
संङ्ग्रामाङ्गणलब्धवैरिविजयः कीर्त्याऽप्तलोकत्रयः।
मर्यादानिलयःप्रकामविनयः प्रज्ञाप्रकर्षाश्रयः
श्रीमद्भूपतिधीरसिंहविजयी राजत्यमोघक्रियः॥४॥

शौर्यावर्जितपञ्चगौडधरणीनाथोपनम्रीकृता-
नेकोत्तुङ्गतुरङ्गसङ्गतसितच्छत्राभिरामोदयः।
श्रीमद्भैरवसिंहदेवनृपतिर्यस्यानुजन्मा जय-
त्याचन्द्रार्कमखण्डकीर्तिसहितः श्रीरूपनारायणः॥५॥

देवीभक्तिपरायणः श्रुतिमुखप्रारब्धपारायणः
सङ्ग्रामे रिपुराजकंसदलनप्रत्यक्षनारायणः।
विश्वेषां हितकाम्यया नृपवरोऽनुज्ञाप्य विद्यापतिं
श्रीदुर्गोत्सवपद्धतिं स तनुते दृष्ट्वा निबन्धस्थितिम्॥६॥



## ।। तत्रादौ देवीपूजागृहनिर्माणम् ।।

रत्नाकरादिनिबन्धेषु देवीपुराणे

ईशाने पूर्वभागे वा सिद्ध्यर्थम् मनसः प्रियम्।
देवीगृहम् प्रकर्त्तव्यं सर्वलक्षणलक्षितम्।।
दश द्वादश वाऽरभ्य यावद्धस्तशतम् भवेत्।
स्वच्छोत्कृष्टम् मुनिश्रेष्ठ! देवीहस्तचतुष्टयम्।।
तस्य मध्यगता कार्या सप्तहस्तगताऽपि वा।।

तथा

कर्त्तव्यन्तोरणन्तद्वद्देवीनां विस्तरोच्छ्रयात्।
हस्तो भूमिगतः कार्यो दृश्यं हस्तचतुष्टयम्।।
न्यग्रोधोदुम्बराश्वत्थप्लक्षम् पूर्वादिषु क्रमात्।
ध्वजच्छत्रपताकादि उच्छ्रयेच्चण्डिकागृहे।।

"आदि" पदाद्घण्टाचामरादि।

तथा

ध्वजमालावितानानि चारुरूपाणि कारयेत्।
पताकाचामरादीनि बहुधा परिकल्पयेत्।।
किङ्किणीशब्दबहुलं द्वारशोभासमन्वितम्।
कर्त्तव्यन्देवतागारं विचित्रेन्दुसमप्रभम्।।

भविष्यपुराणे

दीपमालापरिक्षिप्तं द्वारदामोपशोभितम्।।

देवीपुराणे

चतुर्हस्तप्रमाणास्ताः पताका हस्तविस्तराः।
ऋजुनिर्व्रणवंशैश्च उच्छ्रयोद्विजयेऽति च।।

पदन्देव्याः समुच्चार्य यत्तद्वै सार्वकामिकम्।
खड्गखेटकपाशादि क्षुरिकादि निवेशयेत्।

तथा

वितानध्वजसञ्छन्ने पट्टवस्त्राविभूषते।
मनोरमे कृते स्थाने देव्याः स्नानादिकाः क्रियाः।।

भविष्यपुराणे

कलशांस्तु समादाय हेमगर्भसमन्वितान्।
यवशालिशरावैस्तु वस्त्रालङ्कारभूषितान्।।
आजिघ्रेति च मन्त्रेण कलशांस्तान्निवेशयेत्।

विष्णुधर्मोत्तरे

चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः।
चतुस्समुद्रवलयां स तु भुङ्क्ते वसुन्धराम्।।

।। अथ देवीपूजागृहे प्रतिमानिवेशनम् ।।

देवीपुराणे

अष्टम्यात्रवगेहानि दारुजानि शुभानि च।
एकं वा वित्तभावेन कारयेत्सुरसत्तम।।

"वित्तभावेन" वित्तसत्तानुरूपेण।

तस्मिन् देवी प्रकर्तव्या हैमी वा राजती तथा।
मृद्वार्क्षीलक्षणोपेता खड्गे शूलेऽथ पूजयेत्।।
सर्वोपहारसम्पन्नो वस्त्ररत्नफलादिभिः।

"मृद्वार्क्षी" मृण्मयी शुभदारुमयी वा।

मार्कण्डेयपुराणे

तौ तस्मिन् पुलिने देव्याः कृत्वा मूर्तिम्महीमयीम्।
अर्हणाञ्चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः।।

देवीपुराणे

हेमोत्था चादरात् कार्या सर्वकामप्रसाधिका।
राजती चाखिलारोग्या ताम्री सौभाग्यवर्धिनी।।
चित्रे विरचिता देवी गणगन्धर्वपूजिता।

तथा

हेमराजतमृद्धातुशैलचित्रार्पिताऽपि वा।
खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा।।
यद् यस्याश्चायुधम् प्रोक्तन्तस्मिंस्ताम् प्रतिपूजयेत्।
देवी शक्त्यार्चिता पुंसां राज्यायुःसुतसौख्यदा।।

कल्पतरुलिखितदेवीपुराणे

मृण्मयीम्प्रतिमाङ्कृत्वा विल्वे वा यस्तु पूजयेत्।
आत्मवित्तानुसारेण स लभेन्मौलिकम्फलम्।।

"विल्वे" विल्वशाखायाम्। "मौलिकं" साक्षाद्भगवतीपूजनजन्यम्, प्रतिष्ठितप्रतिमापूजाजन्यमित्यन्ये।।

## ।। अथ प्रतिमालक्षणम् ।।

मत्स्यपुराणे

कात्यायन्याः प्रवक्ष्यामि मूर्तिन्दशभुजान्तथा।
त्रयाणामपि देवानामनुकारणकारिणीम्।।
जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम्।
लोचनत्रयसंयुक्ताम् पद्मेन्दुसदृशाननाम्।।
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम्।
नवयौवनसम्पन्नां सर्वाभरणभूषिताम्।।

सुचारुदशनां तद्वत्पीनोन्नतपयोधराम्।
त्रिभङ्गस्थानसंस्थानाम् महिषासुरमर्दिनीम्।।
त्रिशूलं दक्षिणे दद्यात् खड्गञ्चक्रं क्रमादधः।
तीक्ष्णबाणं तथा शक्तिं वामतोऽपि निबोधत।।
खेटकम् पूर्णचापञ्च पाशमङ्कुशमूर्ध्वतः।
घण्टां वा परशुं वाऽपि वामतः सन्निवेशयेत्।।
अधस्तान्महिषं तद्वद्विशिरस्कम् प्रदर्शयेत्।
शिरश्छेदोद्भवं तद्वद्दानवं खड्ग पाणिनम्।।
हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम्।
रक्तरक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम्।।
वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम्।
सपाशवामहस्तेन धृतकेशञ्च दुर्गया।।

पद्यार्धमिदमधिकं कालिकापुराणे दृष्टम्।

वमद्रुधिरवक्त्रञ्च देव्याः सिंहम् प्रदर्शयेत्।
देव्यास्तु दक्षिणम् पादं समं सिंहोपरि स्थितम्।।
किञ्चिदूर्ध्वन्तथा वाममङ्गूष्ठम् महिषोपरि।
स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत्।।

कालिकापुराणे

योगनिद्रा महामाया जगद्धात्री जगन्मयी।
भुजैः षोडशभिर्युक्ता भद्रकालीति विश्रुता।।
क्षीरोदस्योत्तरे कूले बिभ्रती विपुलान्तनुम्।
अतसीपुष्पवर्णाभा ज्वलत्काञ्चनकुण्डला।।
जटाजूटसखण्डेन्दुमुकुटत्रयभूषिता।
नागहारेण सहिता स्वर्णहारविराजिता।।
शूलं खड्गञ्च शंखञ्च चक्रं बाणन्तथैव च।
शक्तिं वज्रञ्च दण्डञ्च नित्यं दक्षिणबाहुभिः।।

बिभ्रती सततन्देवी विकासिनयनोज्ज्वला।
खेटकञ्चर्म चापञ्च पाशञ्चाङ्कुशमेव च।।
घण्टां पर्शुञ्च मुशलं बिभ्रती वामपाणिभिः।
सिंहस्था नयनैरक्तवर्णैस्त्रिभिरभिज्वला।।
शूलेन माहिषम् भित्त्वा तिष्ठन्ती परमेश्वरी।
वामपादेन चाक्रम्य तत्र देवी जगन्मयी।।

।। अथ चण्डिकारूपकथनम् ।।

धम्मिल्लसंयतकचा विधोश्चाधोमुखीं कलाम्।
केशान्ते तिलकस्योर्ध्वे दधती सुमनोहरा।।
मणिकुण्डलसंधृष्टगण्डा मुकुटमण्डिता।
सज्योतिःकर्णपूराभ्यां कणमापूर्य संगता।।
सुवर्णमणिमाणिक्यनागहारविराजिता।
सदासुगन्धिभिः पद्मैरम्लानैरतिसुन्दरी।।
मालां बिभर्ति ग्रीवायां रत्नकेयूरधारिणी।
मृणालायतवृत्तैस्तु बाहुभिः कोमलैः शुभैः।।
राजन्ती कञ्चुकोपेत पीनोन्नतपयोधरा।
क्षीणमध्या पीतवस्त्रा त्रिवलीमध्यभूषिता।।
शूलं वज्रञ्च बाणञ्च खड्गं शक्तिन्तथैव च।
दक्षिणैः पाणिभिर्देवी गृहीत्वा दिवि राजिता।।
गदां घण्टाञ्च चापञ्च चर्म शंखन्तथैव च।
ऊर्ध्वादिक्रमतो देवी दधती वामपाणिभिः।।
सिंहस्योपरि तिष्ठन्ती व्याघ्रचर्मणि कौशिकी।
बिभ्रती रूपमतुलं ससुरासुरमोहनम्।।

## ।। अथ चामुण्डारूपकथनम् ।।

नीलोत्पलदलश्यामा चतुर्बाहुसमन्विता।
खट्वाङ्गञ्चन्द्रहासञ्च बिभ्रती दक्षिणे करे।।
वामे चर्म च पाशञ्च ऊर्ध्वाधोभावतः पुनः।
दधती मुण्डमालाञ्च व्याघ्रचर्माधराम्बरा।।
कृशाङ्गी दीर्घदंष्ट्रा च अतिदीर्घाऽतिभीषणा।
लोलजिह्वा निम्नरक्तनयना रावभीषणा।।
कबन्धवाहनासीना विस्तारिश्रवणानना।
एषा काली समाख्याता चामुण्डेति च कथ्यते।।

## ।। अथ सर्वमंगलारूपकथनम् ।।

देवीपुराणे

**ब्रह्मोवाच**

अवतारे समासेन कथिता सर्वमङ्गला।
प्रतिमालक्षणं सम्यक्कथयामि यथा भवेत्।।
सिंहपद्मासना सौम्या जटामुकुटमण्डिता।
शूलाक्षसूत्रवरदा कमण्डलुकरा शुभा।।
चतुर्भुज समाख्याता तथा चाष्टभुजां शृणु।
वरदञ्चाभयं खड्गमक्षसूत्रञ्च दक्षिणे।।
दर्पणं शूलचापञ्च चतुर्थे खेटकम् भवेत्।
एवञ्चाष्टभुजा देवी मङ्गला सर्वमङ्गला।।

## ।। अथ प्रतिमाभ्यङ्गव्यवस्था ।।

तत्र ब्रह्मपुराणे

देवानाम् प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत्।
पलानि तत्र देयानि श्रद्धया पञ्चविंशतिः।।
अष्टोत्तरम् पलशतं स्नाने देयञ्च सर्वदा।
द्वे सहस्रे पलानान्तु महास्नाने च सङ्ख्यया।।
दातव्यं येन निर्याति दिक्षु सर्वासु तद्घृतम्।

"देवानाम् इति पुंस्त्वमविवक्षितम्, उद्देश्यकोटित्वेनानाकाङ्क्षितत्वात्। तेन देवीनामपि द्रष्टव्यम्। दधिदुग्धादिस्नपनद्रव्येष्वेषैव संख्या, घृतग्रहणस्योपलणत्वात्। घृताभ्यङ्गादि सुवर्णादिप्रतिमास्वेव, तत्क्षमत्वात्। मृणमय्यान्तु निवेदनमावम्। दर्पणप्रतिविम्बितायां केचिदाचरन्ति.।।

देवीपुराणे

घृतस्नातां घृताभ्यक्तां दुर्गां यत्नातिद्विरूक्षयेत्।
यवगोधूमजैश्चूर्णैर्घर्षयेद्वल्कलेन तु।।

वल्कलं लोध्रादेः।

भविष्यपुराणे

रक्तविल्वाक्षतैः पुष्पैर्दधिदूर्वाकुशैस्तिलैः।
सामान्यःसर्वदेवानामर्घोऽयम् परिकीर्तितः।।

"रक्तम्" अव कुङ्कुमपरम्। "सर्वदेवानाम्" इति पुंस्त्वमविवक्षितम्, देवीनामपि प्रकान्तत्वात्।।

भविष्यपुराणे

आह्वाने चार्घपाद्यादि हेमपात्रेण दापयेत्।

आह्वाने कृते इति शेषः।

देवीपुराणे

हेमराजतताम्राणि काष्ठमृच्छैलजानि च।।

रत्नादीनि च पात्राणि शुभरेखाङ्किकतानि च।।
अर्घनैवेद्यपूजार्थं वलिदाने च कल्पयेत्।

भविष्यपुराणे

षट्त्रिंशदङ्गुलम् पात्रमुत्तमम् परिकीर्तितम्।
मध्यमं तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम्।
वखङ्गुलविहीनन्तु न पात्रं कारयेत् क्वचित्।।

उत्तमादिकीर्त्तनम् फलाधिक्यार्थम्।।

"न क्वचित्" इति वचनात् अष्टाङ्गुलन्यूनपावस्य सर्वत्र धर्मकर्मणि निषेधः।।

देवीपुराणे

पात्राणां हैमरौप्योत्थम् पूजायाम् प्रवरम् मतम्।
घृतं तिलाश्च होमार्थे मदः स्यादनुलेपने।।

"मदः" कस्तूरिका। पूजाहोमादि जयन्तीत्यादिमन्त्रेण।

तदुक्तन्देवीपुराणे

पूजयेत्तिलहोमं तु दधिक्षीरघृतादिभिः।

"कुर्याद्दिव्यास्तु मन्त्रेण" इत्यभिधाय

जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते।।
अनेनैव तु मन्त्रेण जपहोमौ तु कारयेत्।

जयदुर्गेतिमन्त्रेण वा पूजा। तदुक्तं शिल्पिशास्त्रे

नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्तितः।
आदौ मध्ये तथेन्द्रादौ नवतत्वाक्षरैः क्रमात्।।

"दुर्गेदुर्गे रक्षिणिस्वाहा" इति नवतत्त्वाक्षरो मन्त्रः। पूजादौ प्रणवादिः प्रयोक्तव्यः।

कालिकापुराणे

गन्धपुष्पे तथा धूपो दीपो नैवेद्यमेव च।
यस्य यद्दीयते वस्त्रमलङ्कारादि किञ्चन।।

तेषान्दैवतमुच्चार्य कृत्वा प्रोक्षणपूजने।
उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत्।।

तथा

यद्दीयते च देवेभ्यो गन्धपुष्पादिकन्तथा।
अर्घपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्।

स्वयमकरणेऽन्यद्वारा पूजादि कारयितव्यम्।

तदुक्तन्देवीपुराणे

स्वयं वाऽप्यन्यतो वाऽपि पूजयेत्पूजयेत वा।

भविष्यपुराणे

विनापात्रेण यः कुर्यात्प्रतिष्ठां याज्ञिकीं क्रियाम्।
विफला जायते सर्वा वाहनादिधनापहा।।
बलिहीने तु दुर्भिक्षं गन्धहीने त्वयोग्यताम्।
धूपहीने तथोद्वेगम् वस्त्रहीने धनक्षयम्।।

प्राप्नुयादिति शेषः।।

रत्नहीने म्रियेद्भार्या विपताके च नायकः।
छत्रहीने हरेच्छत्रं विताने मरको भवेत्।।

''तानं'' वितानन्तेन हीने।

वेदीहीने तु नाशः स्यान्नगरस्य पुरस्य च।
कलशैर्बन्धुनाशश्च भवेद्वै मुनिसत्तम।।

कलशैर्हीन इत्यनुषज्यते।

तोरणानामभावात्तु हत्याज्ज्ञातीन् सवान्धवान्।
दक्षिणारहिते सर्वं व्यर्थं स्यान्नात्र संशयः।।
मन्त्रविद्याविहीनन्तु सम्पूर्णमपि नश्यति।
पात्रमत्रसमायुक्तं सर्वदोषापहम्भवेत्।।

अथ विष्णुः

स्नातः सुप्रक्षालितपाणिपादः शुचिर्वद्धशिखी दर्भपाणिराचान्तः। प्राङ्मुख

उदङ्मुखो वोपविष्टो ध्यानी मौनी देवताः पूजयेत्।।

गौतमः

रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि।
शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः।।

भविष्यपुराणे

शुचिः सुवस्त्रधृक् प्राज्ञो मौनी ध्यानपरायणः।
गतकामभयद्वन्द्वो रागमात्सर्यवर्जितः।।
आत्मानम्पूजयित्वा च सुगन्धसितवाससा।
सुमुहूर्त्ते यजेद्देवान् स्वकीयासनसंस्थितान्।।

## ।। अथ पूजोपचारः।।

तत्रानुलेपनं कालिकापुराणे

सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः।
तस्मात्सर्वप्रयत्नेन दद्यान्मलयजं सदा।।

देवीपुराणे

घृतन्तिलाश्च होमार्थे मदश्चैवानुलेपने।
चन्दनागुरुकर्पूरं नखं धूपे वरम्मतम्।।

''मन्दः'' कस्तूरिका।

तथा

चन्द्राख्यं लेपनन्देयं सर्वसिद्धिप्रदायकम्।

''चन्द्राख्यं'' कर्पूरम्।

कालिकापुराणे

कृष्णागुरुः सकर्पूरः सहितो मलयोद्भवैः।
कुङ्कुमागुरुकस्तूरीचन्द्रभागैः समीकृतैः।।
गन्धः प्रीतिप्रदा देव्या दुर्गायाः सह शम्भुना।।

देवी पुराणे

मदकर्पूरकाश्मीररोचनानाञ्चतुष्टयम्।
एतेन लेपयेद्देवीं सर्वकामानवाप्नुयात्।।

।। अथ पुष्पाणि।।

देवीपुराणे

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्तितैः।।
आत्मनामोद्भवैर्वापि पूष्पैः सम्पूजचेच्छिवाम्।
ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिकुब्जकैः।।
सित्करक्तैस्तथा पद्मैर्न्नीलपद्मैश्च पाण्डुरैः।
किंशुकैस्तगरैश्चैव किङ्किरातैः सचम्पकैः।।

"किङ्किरातो" वाणः।

बकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः।

"तिरीटको" लोध्रः।

करवीरार्कपुष्पैश्च सांशपैश्चापराजितैः।।
सितरक्तैस्तथा पीतैः कृष्णैश्चैव चतुर्विधैः।
धत्तूरकातिमुक्तैश्च बन्धूकागस्तिसम्भवैः।।
दमनैः सिन्दुवारैश्च सुरभीमरुवकैस्तथा।

"सुरभी" शल्लकी।

लताभिर्ब्रह्मवृक्षस्य दूर्वाङ्कुरैश्च कोमलैः।।

"ब्रह्मवृक्षः" पलाशः।

मञ्जरीभिः कुशानाञ्च विल्वपत्रैः सुशोभितैः।
उक्तानुक्तैस्तथासर्वैर्जलजैः स्थलसम्भवैः।।

अनुक्तैरनिषिद्धैः।

पत्रैः पुष्पैर्यथालाभं सर्वौषधिमयैःशुभैः।
धान्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत्।।

भविष्यपुराणे

अलाभे पुष्पजातीनां पत्राण्यपि निवेदयेत्।
पत्राणामप्यलाभे तु ओषधीश्च निवेदयेत्।।
ओषधीनामभावे तु भक्त्या भवति पूजिता।

देवीपुराणे

कदम्बैरर्चयेद्रात्रौ मल्लिका उभयोःस्मृता।
दिवाशेषाणि पुष्पाणि यथालाभम् प्रपूजयेत्।।
केशकीटापविद्धानि शीर्णपर्युषितानि च।
स्वयम्पतितपुष्पाणि त्यजेदुपहृतानि च।।
मुकुलैर्न्नार्चयेद्देवीमपक्वन्न निवेदयेत्।
फलं क्वथितविद्धञ्च कालापक्वमपि त्यजेत्।।

''कथितं'' स्विन्नं। ''कालापक्वम्'' असमयपक्वम्।

## ।। अथ धूपः।।

भविष्यपुराणे

सर्वेषामेवधूपानां दुर्गाया गुग्गुलः प्रियः।
घृतयुक्तो विशेषेण सततम्प्रीतिवर्द्धनः।।

कालिकापुराणे

कृष्णागुरुः सकर्पूरो महामायाप्रियः स्मृतः।

देवीपुराणे

धूपः कल्याणनामा तु नित्यन्देव्याः प्रियो नृप।

कालिकापुराणे

नासाक्षिरन्ध्रसुखदः सुगन्धोऽतिमनोहरः।
दह्यमानस्य काष्ठस्य प्रयतस्येतरस्य च।।
परागस्याथ वा धूपो निस्तापो यश्च जायते।

स धूप इति विज्ञेयो देवानान्तुष्टिदायकः।।
राशीकृतैर्न्नचैकत्र तैर्द्रव्यैः परिधूपयेत्।
मेदोमज्जसमायुक्तान्न धूपान्विनिवेदयेत्।।
परकीयांस्तथा घ्रातांस्तेयीकृत्याभिमार्गितान्।
पुष्पं धूपञ्च गन्धञ्च उपचारांस्तथापरान्।।
घ्रातान्निवेद्य देवेभ्यो नरो नरकमाप्नुयात्।
न भूमौ वितरेद्धूपं नासने न घटे तथा।।
यथातथाऽधारगतां कृत्वा तं विनिवेदयेत्।

## ।। अथ दीपः।।

तत्र कालिकापुराणे

घृतप्रदीपः प्रथमस्तिलतैलोद्भवस्ततः।
सार्षपः फलनिर्यासजातो वा राजिकोद्भवः।।
दंधिजश्चान्नजश्चैव दीपाः सप्त प्रकीर्त्तिताः।

महाभारते

हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः।
वसामेदोऽस्थिनिर्यासैर्न्न कार्यः पुष्टिमिच्छता।।

कालिकापुराणे

नेत्राह्लादकरः स्वर्चिर्द्दूरतापविवर्जितः।
सुशिखः शब्दरहितो निर्द्धूमो नातिह्रस्वकः।।
दक्षिणे दीपवृक्षस्थः प्रदीपः श्रीविवृद्धये।
सुवृत्तवर्तिसस्नेहम् पात्रेऽभग्ने सुशोभने।।
प्रदीपवृक्ष कोटौ तु दीपन्दद्यात्प्रयत्नतः।
लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात्।।
न स दीप इति ख्यात ओघवह्निस्तु स स्मृतः।

वृक्षे प्रदीपो दातव्यो न तु भूमौ कदाचन।।
सर्वंसहा वसुमती सहते नत्विदं द्वयम्।
स्वकायपादघातञ्च दीपतापन्तथैव च।।
न मिश्रीकृत्य दद्यात्तु दीपस्नेहान्घृतादिकान्।
कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकम्व्रजेत्।।
पद्मसूत्रभवा दर्भगर्भसूत्रभवाऽथ वा।
शशजा बादरा वाऽपि फलकोषोद्भवापि वा।।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधा स्मृता।

"वादरा" कार्पासिकसूखवा। "फलकोषोद्भवा" कौशेयसूत्रभवा।

शाणं वादरकं वस्त्रं जीर्णम्मलिनमेव वा।।
उपयुक्तन्तु न दद्याद्वर्तिकार्थं कदाचन।
नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम्।।
दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्।

## ।। अथ नैवेद्यानि।।

देवीपुराणादिषु

नैवेद्यं सुप्रभूतञ्च देयं देव्याः शुभार्चितम्।
परमान्नम्पिष्टकञ्च यावकङ्कृसरन्तथा।।
मोदकम्पृथुकादीनि कन्दुपक्वानि चोत्सृजेत्।
हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम्।।
निवेदयेन्महादेव्यै सर्वाणि व्यञ्जनानि च।
क्षीरादीन्यथ गव्यानि माहिषाणि य सर्वशः।।
लाङ्गलञ्च कपित्थञ्च द्राक्षां क्रमुकमेव च।

"लाङ्गलम्" नारिकेरद्यफलम्। "क्रमुकम्" गुवाकम्।

करकं श्रीफलं कोलं कूष्माण्डं पनसं तथा।।

"करकं" दाडिमम् "कोलं" वदरम्।

वकुलञ्च मधूकञ्च रसालाम्रातके तथा।
औदुम्बरञ्च पुन्नागं करुणं कर्कटीफलम्।।

"करुणं" गौडे प्रसिद्धम्।

जाम्बवम् पिण्डखर्जूरम् बीजपूरं च जम्भलम्।

"जम्भलं" जम्बीरम्।

हरीतकीमामलकं षड्विधं नागरङ्गकम्।।
मातुलुङ्गञ्च लकुचं कदलीं करमर्द्दकम्।
शृङ्गाटकं कशेरुञ्च शालूकञ्च मृणालकम्।।
कुमुदानाम् पङ्कजानाम् फलानि विनिवेदयेत्।

तथा

बालाप्रियैश्च नैवेद्यैर्लाजाक्षतफलादिभिः।।
इक्षुदण्डैः सिताभिश्च लवलीनागरङ्गकैः।
पूजयेज्जगतान्धात्रीं सर्वकामार्थसिद्धये।।

## ।। अथ देवीमहोत्सवपूजाविधिः।।

राजधर्मे देवीपुराणे

इन्द्र उवाच

आश्विनस्य सिते पक्षे नवम्यां प्रतिवत्सरम्।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम्।।

ब्रह्मोवाच

शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि।
महासिद्धिप्रदं धन्यं सर्वशत्रुनिवर्हणम्।।
सर्वलोकोपकारार्थं विशेषादसिवृत्तिषु।
कर्तव्यम् ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालकैः।।
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः।।

महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम्।
कर्त्तव्यं सुरराजेन्द्र देवीभक्तिसमन्वितैः।।
कन्यासंस्थे रवौ शक्र शुक्लामारभ्यनन्दिकाम्।
अयाची अथ एकाशी नक्ताशी अथ [illegible]वदः।।

"नन्दिकां" षष्ठीमुपक्रम्य षष्ठ्यादितिथिचतुष्टये नियमचतुष्टस्य यथासंख्यमभि सम्बन्धोपपत्तेरित्यके।

नन्दां प्रतिपदमारभ्य, प्रथमनन्दातिक्रमे कारणाभावात्। नित्यमचतुष्टयस्य शक्त्यपेक्षया विकल्पेनान्वयोपपत्तेरित्यपरे। "वाय्वदः" वायुभक्षः।

प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः।
जपहोमसमायुक्तः कन्यकाम् भोजयेत् सदा।।

"जितद्वन्द्वः" शीतोष्णादिद्वन्द्वदुःखेष्वनुद्विग्नचित्तः। "शिवपूजकः" शिवश्च शिवा च शिवौ तयोः पूजकः देवीपूजाव्रतत्वेनैकशेषाश्रयणात्। "जपहोमौ" दुर्गादेवताकौ, दुर्गाव्रते विहित्वात्। "सदा' नन्दादिनवम्यन्तम् प्रतिदिनम्।

अष्टम्यां नवगेहानि दारुजानि शुभानि च।
एकं वा वित्तभावेन कारयेत्सुरसत्तम।।
तस्मिन्देवी प्रकर्त्तव्या हैमी वा राजती तथा।
मृद्वार्क्षीलक्षणोपेता खड्गशूले च पूजयेत्।।
सर्वोपहारसम्पन्नो वस्त्ररत्नफलादिभिः।
कारयेद्रथदोलादि बलिपूजाञ्च दैविकीम्।।

"दैविकीम्" भविष्योक्तरथयात्रावलिग्राहिदेवसम्बन्धिनीम्।

पुष्पैश्च द्रोणविल्वाम्रजातीपुन्नागचम्पकैः।
विचित्रां रचयेत्पूजामष्टम्यां समुपासयेत्।।

"उपासयेत्" आराधयेत्।

दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहितः।

"मन्त्रं" दुर्गादेवताकमेव।

तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तम।।
पञ्चाब्दं लक्षणोपेतं गन्धधूपसमन्वितम्।
विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत्।।

"पञ्चाब्दम्" पञ्चवार्षिकम् महिषमजम् मेषं वा।

तदुत्थं रुधिरम् मांसं गृहीत्वा पूतनादिषु।
नैर्ऋतेभ्यः प्रदातव्यम् महाकौशिकमन्त्रितम्।।

पूतनादिष्वित्यादिशब्देन विदारीचरकीपापराक्षस्य उक्ताः।। चतुर्थ्यर्थे सप्तमी।

महाकौशिकमन्त्रो वक्ष्यते।

तस्याग्रतो नृपः स्नायाच्छत्रुं कृत्वा तु पिष्ठजम्।
खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः।।

तस्या देव्या अग्रतः विसर्जनीयलोपेसवर्णदीर्घत्वं छान्दसम्। नृपः स्नायात्। किङ्कृत्वा? पिष्ठजं शत्रुं कृत्वा? खड्गेन घातयित्वा, स्कन्दविशाखयोर्द्दद्यादनन्तरं स्नायात्। अत्रार्थक्रमेण पाटिकः क्रमो वाध्यते। अभिचारकर्मानन्तरं शुद्ध्यापादकस्य स्नानस्योचितत्वात्।

ततो

देवीं तु स्नापयेत् प्राज्ञः क्षीरसर्पिर्जलादिभिः।
कुङ्कुमागुरुकर्पूरचन्दनैश्चर्च्य पूजयेत्।।

"चर्च्य" अनुलिप्य।

हेमादिरत्नपुष्पाणि वासांसि त्वहतानि च।
नैवंद्यं सुप्रभूतञ्च देयन्देव्याः सुभावितैः।।
देवीभक्ताश्च पूज्यन्ते कन्यकाः प्रमदादयः।
द्विजान्दीनान्धपाखण्डानन्नदानेन तोषयेत्।।
नन्दाभक्ता नरा ये तु महाव्रतधराश्च ये।
पूजयेत्तान्विशेषेण यस्मात्तद्रूपमाम्बिकम्।।

"नन्दाभक्ताः" देवीभक्ताः। "महाव्रतधराः" कापालिकाः।

मातृणाञ्चैव देवीनाम् पूजा कार्या तदा निशि।

''मातृणां'' ब्राह्मीमाहेश्वरीप्रभृतीनाम्।

ध्वजच्छत्रपताकादि उच्छ्रयेच्चर्च्चिकागृहे।।

''चर्च्चिका'' दुर्गा।

रथयात्राम्बलिक्षेपपटुवाद्यरवाकुलम्।
कारयेत्तुष्यते येन देवी पशुनिपातनैः।।

बलिक्षेपपटुवाद्यरवाकुलं यथा स्यादेवं रथयात्राङ्कारयेदित्यन्वयः।

अश्वमेधमवाप्नोति भक्तितः सुरसत्तम।
महानवम्याम् पूजेयं सर्वकामप्रदायिका।।
सर्वेषु सर्ववर्णेषु तव भक्त्या प्रकीर्त्तिता।
कृत्वाऽऽप्नोति यशोराज्यपुत्रायर्द्धनसम्पदः।।

।। अथाश्विनकृष्णनवम्यादिपूजाकल्पः।।

कृत्यरत्नाकरे

निमित्तकोषलिखितभगवतीपुराणेऽपि

कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः।।
शुक्लपक्षे चतुर्थ्यान्तु देवीकेशविमोचनम्।
प्रातरेव तु पञ्चम्यां स्नापयेत्सुशुभैर्जलैः।।
सप्तम्याम्पत्रिकापूजा अष्टम्याञ्चाप्युपोषणम्।
पूजा च जागरश्चैव नवम्याम्विधिवद्बलिः।।
सम्प्रेक्षणन्दशम्यान्तु क्रीडाकौतुकमङ्गलैः।
नीराजनन्दशम्यान्तु बलवृद्धिकरम्महत्।।

शक्तिपक्षे पक्षपूजेयं द्रष्टव्या।

## ।। अथाश्विनशुक्लप्रतिपदादिपूजासूचनम् ।।

कालिकापुराणे

रामस्यानुग्रहार्थाय रावणस्य वधाय च।
रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ।।
ततस्तु त्यक्तनिद्रा सा नन्दायामाश्विने सिते।
रामरावणयोर्युद्धं सप्ताहं सा न्ययोजयत् ।।
व्यतीते सप्तरात्रे तु नवम्यां रावणन्ततः।
रामेण घातयामास महामाया जगन्मयी ।।
यावत्तयोः स्वयन्देवी युद्धकेलिमुदैक्षत।
तावत्तु सप्तरात्राणि सर्वदेवैः सुपूजिता ।।
निहते रावणे वीरे नवम्यां सकलैः सुरैः।
विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः ।।
ततः सम्प्रेषिता देवी दशम्यां शावरोत्सवैः।
तथैव च नराः सर्वे कुर्युः पूजां यथाविधि ।।
बलिनीराजनं राजा कुर्याद्बलविवृद्धये।
दिव्यालङ्कारयुक्ताभिः कामिनीभिः प्रनर्त्तनम् ।।
कर्त्तव्यं गीतवाद्यादि क्रीडाकौतुकमङ्गलम्।

## ।। अथ प्रतिपदादिप्रतिदिनकृत्यम् ।।

तत्र भविष्यपुराणम्पठन्ति

केशसंस्कारद्रव्याणि प्रदद्यात्प्रतिपद्दिने।
पट्टडोलन्द्वितीयायां केशसय्यँमहेतवे ।।
दर्पणञ्च तृतीयायां सिन्दूरालक्तकन्तथा।
मधुपर्कञ्चतुर्थ्यान्तु तिलकन्नेत्रमण्डनम् ।।
पञ्चम्यामङ्गरागञ्च शक्त्यालङ्करणानि च।
षष्ठ्यां विल्वतरोर्बोधं सायंसन्ध्यासु कारयेत् ।।

सप्तम्याम्प्रातरानीय गृहमध्ये प्रपूजयेत्।
उपोषणमथाष्टम्यां साष्टशक्तेश्च पूजनम्।।
नवम्यामुग्रचण्डायास्तद्वद्देवार्चनन्दिवा।
पूजा च बलिदानञ्च तद्वन्मातृः प्रपूजयेत्।।
कुमारी पूजनीया च भूषणीया च भूषणैः।
सम्पूज्य प्रेषणङ्कुर्याद्दशम्यां शाबरोत्सवैः।।
अनेन विधिना यस्तु देवीम्पूजयते नरः।
स्कन्दवत् पालयेत् तं तु देवी सर्वापदि स्थितम्।।
पुत्रदारधनार्थीनां सङ्ख्या तस्य न विद्यते।
भुक्त्वेह परमान् भोगान्प्रेत्य देवगणो भवेत्।।

## ।। अथ षष्ठ्यादिपूजाविधानम्।।

कालिकापुराणे

बोधयेद्विल्वशाखायां षष्ठ्यां देवीम् फलेषु च।
सप्तम्यां विल्वशाखायास्तामाहृत्य प्रपूजयेत्।।
पुनः पूजान्तथाऽष्टम्यां विशेषेण समाचरेत्।
जागरञ्च स्वयं कुर्याद्बलिदानम् महानिशि।।
प्रभूतबलिदानञ्च नवम्यां विधिवच्चरेत्।
ध्यायेद्दशभुजां देवीं दुर्गातन्त्रेण पूजयेत्।।
विसर्जनं दशम्यान्तु कुर्याद्वै शाबरोत्सवैः।
कृत्वा विसर्जनं तस्यां तथा मंगलमाचरेत्।।

"शाबरोत्सवैः" शबरोचितवेषभाषाकर्दमानुलेपनादिभिः।

तदुक्तं कालिकापुराणे

अन्तपादो दिवाभागे श्रवणस्य यदा भवेत्।
तदा सम्प्रेषणन्देव्या दशम्यां शाबरोत्सवैः।।

शबरकीडनमेवाह

वालिनीभिः कुमारीभिर्वेश्याभिर्न्नर्त्तकैस्तथा।
शङ्खतूर्यनिनादैश्च मृदङ्गैः पटहैस्तथा।।
ध्वजैः पुष्पैर्वहुविधैलाजपुष्पप्रकीर्णकैः।
धूलिकर्दमविक्षेपैः क्रीडाकौतुकमङ्गलैः।।
भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः।
भगलिङ्गक्रियाभिश्च क्रीडयेयुरलञ्जनाः।।
परैर्न्नाक्षिप्यते यस्तु यः परन्नाक्षिपत्यपि।
तस्य क्रुद्धा भगवती शापन्दद्यात्सुदारुणम्।।

## ।। अथ सप्तम्यादिपूजाविधानम्।।

राजमार्त्तण्डे

सप्तम्याम् मूलयोगे प्रथमपदगते पत्रिका पूजनीया
अष्टम्यां रात्रियोगे कृतनियमविधौ यज्ञकर्मप्रदिष्टम्।
नानाजीवाभिघाते तिथिरपि नवमी रौद्रदृष्टिः प्रदिष्टा
सापत्रीवैष्णवान्तेकृतविहितविधिःप्रेषयेत्तान्दशम्याम्।।

तथा

मूलम्प्राप्य प्रथमचरणेऽभ्यर्चनञ्चण्डिकायाः
कृत्वाऽष्टम्यामशनरहितस्त्यक्तनिद्रश्च पूजाम्।
प्रातःकाले पशुबलिविधिः स्नानदानन्नवम्या-
न्निर्माल्यन्तु श्रवणदशमीवासरर्क्षेषु जह्यात्।।

कात्यायनः

मूलेन प्रतिपूजयेद्भगवतीञ्चण्डीम्प्रचण्डाकृति-
ञ्चाष्टम्यामुपवाससङ्गततया भक्त्या समाराधयेत्।

नानापाशवमज्जमांसरुधिरैः कृत्वा नवम्याम्बलि-
न्नक्षत्रं श्रवणन्तिथिञ्च दशमीं सम्प्राप्य सम्प्रेषयेत्।।

ज्योतिःशास्त्रे

ऋक्षत्रये च मूलादौ सप्तम्यामाश्विने सिते।
चण्डिकामुपहारैश्च पूजयेद्राष्ट्रवृद्धये।।
कुर्याज्जागरमष्टम्यान्नवम्यां विधिवद्बलिम्।
दशम्याम्बलवृद्ध्यर्थं कुर्यान्नीराजनं नृपः।।
मूलेन बोधयेद्देवीम्पूर्वेण प्रतिपूजयेत्।
उत्तरेणार्चनं कृत्वा श्रवणेन विसर्जयेत्।।

## ।। अथ तिथिनक्षत्रबलाबलम्।।

तत्र क्वचित्तिथिकल्पः क्वचिन्नक्षत्रकल्प उक्तस्तयोस्सति सम्भवे योग एवादरणीयः फलाधिक्यार्थः। केवलतिथिनक्षत्रयोस्तु तिथिरादरणीया, न नक्षत्रम्, तिथेः प्राधान्यात्।।

यदाह ज्योतिःशास्त्रे गर्गः

तिथिः शरीरन्तिथिरेवकारण-
न्तिथिः प्रधानन्तिथिरेव साधनम्।
तिथिं विना नैव च दृश्यते शशी
विनेन्दुना नैव च कर्मसिद्धिः।

गुणिसर्वस्वे

तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम्।
तस्मात्तिथिम्प्रशंसन्ति नक्षत्रन्न तिथिं विना।।

देवलोऽप्याह

तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम्।
योगाभावेतिथिर्ग्राह्या देव्याः पूजनकर्मणि।।

लिङ्गपुराणे

मूलाभावे तु सप्तम्यां जगन्मातरमम्बिकाम्।
आवाह्य तु विधानेन गृहमध्ये प्रपूजयेत्।।

गौडनिवन्धे

ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां विल्वाभिमन्त्रणम्।
सप्तम्याम् मूलयुक्तायाम् पत्रिकायाः प्रवेशनम्।।
पूर्वाषाढान्विताष्टम्यां देवी पूज्या ह्युपोषणात्।
उत्तरेण नवम्यां च बलिभिः पूजयेच्छिवाम्।।
श्रवणेन दशम्याञ्च प्रणिपत्य विसर्जयेत्।
मूलाभावे तु सप्तम्यां केवलायाम् प्रवेशयेत्।।
तथा तिथ्यन्तरेप्येवमृक्षेषु च फलोच्चयः।

"फलोच्चयः" फलातिशयः।

षष्ठी च सप्तमी चैव अष्टमी यदि वा पुनः।
यत्र सम्प्राप्यते मूलं तत्र पत्रीम् प्रवेशयेत्।।

इति केवलमूलवचनमनुवादमात्रम्।

तथा च भविष्यपुराणे

नक्षत्रम् परमम् मूलं कन्यायां सविता तथा।
सर्वपापप्रशमनी महती नवमी स्मृता।।
तस्यां स्नानं जपो होमो दानं चाक्षयमुच्यते।

पत्रीप्रवेशनं विसर्जनञ्च कदाचिन्नक्षत्रानुरोधेनापि न रात्रौ कर्त्तव्यम्।

यदाह

पत्रीविसर्जनं रात्रौ प्रवेशं वा करोति यः।
तस्य राष्ट्रविनाशः स्याद्राजा च विकलो भवेत्।।
ऋक्षयोगानुरोधेन रात्रौ पत्रीप्रवेशनम्।
विसर्गं वाऽऽचरयेद्यस्तु सराष्ट्रः स विनश्यति।।

श्रवणान्ते विसर्जनमित्यादिवचनानुरोधेन रात्रौ न विसर्जनं कर्त्तव्यम्।

यदाह

अन्तपादे निशाभागे श्रवणस्य यदा भवेत्।
तदा देव्याः समुत्थानं दशम्यां दिनभागतः।।

"समुत्थानं" सम्प्रेषणम्। सम्प्रेषितादिगन्तुंसमुत्तिष्ठतीति फलेन निर्दिष्टम्।

## ।। अथ तिथिद्वैधव्यवस्था ।।

अत्र यद्यपि अन्यत्र पूजोपवासव्रतादौ सप्तमी षष्ठीमिश्रोपादेया, षण्मुन्योरिति युग्मविधिवाक्यबलात्तथाऽपि षष्ठीदिने पूर्वाह्णे सप्तमीलाभेऽपि पत्रिकासप्तम्युदयगामिन्येवोपादेया।

तथा चोक्तम्

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया।
सूर्योदयमुदीक्षन्ते न तत्र तिथियुग्मता।।

दिवापूजोपवासयोन्तिथिद्वैधे महाष्टमी नवमीमिश्रैवोपादेया, वसुरन्ध्रयोरितियुग्मविधिवाक्यवलात्, स्मृत्यन्तरवलाच्च।

तथा च विष्णुधर्मोत्तरे शङ्करवाक्यम्

अष्टम्या नवमी युक्ता नवम्या चाष्टमी युता।
अर्द्धनारीश्वरप्राया तिथिः सर्वव्रतादिषु।।

गर्गस्मृतिरपि

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च ता उपोष्याः पराश्रिताः।।

स्कन्दपुराणे

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी।
सप्तमी परविद्धा च न पूज्यं तिथिपञ्चकम्।।

भीमपराक्रमः

न दिवा न निशाऽपि च विष्टिहता
न च सप्तमिशल्यसमोपहता।
यदि याष्टमिशेषभवा नवमी
अमरैरपि पूज्यतमा कथिता।।

अस्यार्थः

यदि तिथिद्वैधेऽष्टमीशेषभवा नवमी तदाऽष्टमी देवैरपि पूज्यतमा भवेत्। यतो दिवा निशापि विष्टिहता न भवति सप्तमीशल्योपहता च सा न भवति।

दुर्गोत्सवाधिकारे भोजराजः

उमाया नवमी प्रोक्ता हरस्य तिथिरष्टमी।
द्वयोरैक्ये महापुण्या उमामाहेश्वरी तिथिः।।

स्कन्दपुराणे

नवम्या सह संयुक्तामष्टमीं कारयेद्ध्रुवम्।
दुर्गांदेवी तथा पूज्या पूर्वविद्धां न कारयेत्।।

देवीपुराणे

नवमीसंयुक्ता कार्या सदा दुर्गाष्टमी वुधैः।
सप्तमीसहिता हन्ति पूर्वपुण्यफलं कृतम्।।

तदेवं यद्यपि सप्तमीशल्योपहताऽष्टमी त्याज्याऽवसीयते, तथापि

आश्विनस्य सिते पक्षे या तु स्यात्तिथिरष्टमी।
तस्यां रात्रौ पूजनीया महाविभवविस्तरैः।।

इत्येवमादिवचनप्राप्तायां रात्रिपूजायामष्टम्या रात्रियोग एवादरणीयः।

नक्तव्रतेषु सर्वेषु रात्रियोगो विशिष्यते।
कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्।

इतिवचनात् सामान्यवचनस्य बाधकं विना संकोचे मानाभावात्, युग्मविधिवाक्यानां दिवातनपूजाविषयत्वेनोपपत्तेः। तथाऽशक्तस्यैकदिनेऽपि पूजाविधानम्।

देवीपुराणे

निष्कलं सकलं वापि एकं पञ्चकमेव वा।
पूजयेत्तत्र कन्यास्थे क्षणं पूजां न लंघयेत्।।

"निष्कलं" चन्द्रकलाशून्यतिथिरमावास्या। "सकलं" चन्द्रकलासहिता तिथिः पूर्णिमा। "कन्यास्थे" रवावितिशेषः, "क्षणं न लंघयेत्" इति क्षणं देवीमहोत्सवं प्राप्य पूजां न लंघयेत् इत्यर्थः।

तथा च कालिकापुराणे

भगवानुवाच
यो मोहादथवाऽऽलस्याद्देवीं दुर्गामहोत्सवे।
न पूजयति दम्भाद्वा द्वेषाद्वाऽप्यथ भैरव।।
क्रुद्धा भगवती तस्य कामानिष्ठान्निहन्ति वै।
परत्र च महामायाबलिर्भूत्वा स जायते।।
तस्माल्लोकहितार्थाय सर्वलोकविभूतये।
दुर्गातन्त्रेण मन्त्रेण पूजितव्ये उभे अपि।।
भद्रकाली च्चोग्रचण्डा महामायामहोत्सवे।

## ।। अथ प्रतिपदि यजमानस्नापनाय शान्तिकलशस्थापनविधिः।।

मत्स्यपुराणे

प्रागुत्तरेण तस्माच्च दध्यक्षतसमन्वितम्।
चूतपल्लवसंछन्नं फलवस्त्रसमन्वितम्।।
पञ्चरत्नसमायुक्तम्पञ्चभङ्गदलान्वितम्।।

"पञ्चभङ्गदलानि" चूताश्वत्थवटप्लक्षोदुम्बराणाम्पल्लवानि।

स्थापयेदव्रणङ्कुम्भं वरुणन्तत्र विन्यसेत्।

गङ्गाद्यास्सनिरतस्सर्वास्समुद्राश्च सरांसि च।।
गजाश्वरथ्यावल्मीकसङ्गमाद्धदगोकुलात्।
मृदमानीय राजेन्द्र सर्वौषधिजलान्विताम्।।
स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित्।
सर्वे समुद्रास्सरितस्सरांसि जलदा नदाः।।
आयान्तु यजमानस्य दुरितक्षयकारकाः।

भविष्यपुराणे

श्रीकामस्तु न्यसेत्सम्यग्देशवृद्धिकरं शुभम्।
काञ्चनं घृतगोधूमान् दूर्वां रोचनया सह।।

ब्रह्मपूजाकलशे

तथा च दुर्गोत्सवप्रकरणे पक्षपूजायां कालिकापुराणे

अग्निर्ब्रह्मा भवानी च गजवक्त्रो महोरगः।
स्कन्दो भानुर्मातृगणो दिक्पालाश्च नवग्रहाः।।
एषां घटेषु प्रत्येकम्पूजयित्वा यथाविधि।
मूर्त्तिम्पवित्रमेकैकं दद्यादेभ्यस्समाहितः।।

## ।। अथ स्वस्त्ययनविधिः।।

मार्कण्डेयपुराणे

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः।
श्रोतव्यञ्च सदा भक्त्या परं स्वस्त्ययनम्महत्।।

ज्योतिःशास्त्रे

महात्म्यं भगवत्याश्च पुराणादिषु कीर्त्तितम्।
पठेच्च शृणुयाच्चापि सर्वकामसमृद्धये।।

वेदस्वस्त्ययनमपि कार्यम्।

तथा च लघुव्यासः

वेदाभ्यासादवाप्नोति पुरुषार्थचतुष्टयम्।
शान्तिस्वस्त्ययने तद्वत्सर्वान्कामाँश्च विन्दति।।

## ।। अथ देवीमाहात्म्यश्रवणकीर्तनम्।।

मार्कण्डेयपुराणे

**देव्युवाच**

"एभिस्तवैश्च मान्नित्यं स्तोष्यते यस्समाहितः" इत्यादि
"दूरोदेव पलायन्ते स्मरतश्चरितम्मम" इत्यन्तम्।

तथा देवा ऊचुः

यश्च मर्त्यस्तवैरेभिस्त्वां स्तोष्यत्यमलानने।
तस्य वित्तर्द्धिविभवैर्द्धनदारादिसम्पदाम्।।
वृद्धयेऽस्मत्प्रसन्ना त्वम्भवेथास्सर्वदाऽम्बिके।

तथा

स्तुता सम्पूजिता पुष्पैर्द्धूपगन्धादिभिस्तथा।
ददाति वित्तम्पुत्रांश्च मतिं धर्मे तथा शुभाम्।।

## ।। अथ द्वितीयादि रेवन्तादिपूजा।।

तत्र शालिहोत्रे

अश्वयुजि शुक्लपक्षे तिथौ द्वितीयादिसप्तरात्रन्तु।
तत्र दिवाकरकिरणैरस्पृष्टा वाजिनो रक्ष्याः।।

तथा

शुभेऽहनि मुहूर्त्ते च क्ष्मापतिस्सपुरोहितः।
कृतमंगलसंस्कारान्वाहान् शालाम्प्रवेशयेत्।।
शिरसि स्थापयेद्देवं रेवन्तम्पूजयेत्सदा।

तथा

नानाखाद्यनिवेद्यानि रेवन्ताय निवेदयेत्।

ब्रह्मपुराणे

अश्वयुक् शुक्लपक्षे तु स्वातियोगे सुशोभने।
पूर्वमुच्चैःश्रवानां प्रथमं सूर्यमावहत्।।
तस्मात्साश्वैर्न्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा।
पूजनीया च तुरगा नवमीं यावदेवहि।।
शान्तिस्वस्त्ययने कार्ये तदा तेषान्दिने दिने।
धान्यम्भल्लातकङ्कुष्ठं वचां सिद्धार्थकांस्तथा।।
पञ्चरंगेण सूत्रेण कण्ठे तेषान्तु बन्धयेत्।
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः सवैष्णवैः।।
वैश्वदेवैस्तथाऽऽग्नेयैर्होमः कार्यो दिने दिने।
तुरगा रक्षणीयाश्च पुरुषैः शस्त्रपाणिभिः।।
न च ताड्याः क्वचित्तत्र न च वाह्याः कथञ्चन।

वायव्यैरित्यादिबहुवचनश्रवणात् कपिञ्जलन्यायेन त्रिभिस्त्रि र्वायव्यादिमन्त्रैर्वैदिकैर्होमः कर्त्तव्यः।

शालिहोत्रविहितमन्त्रैरपि शान्तिहोमः कार्यः।

## ।। अथ गजपूजा ।।

ब्रह्मपुराणे

ज्येष्ठायोगे पुरा तत्र गजाश्चाष्टौ महाबलाः।
पृथिवीमवहन्पूर्वं सशैलवनकाननाम्।।
कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः।
सुप्रतीकोञ्जनो नीलस्तस्मात्तांस्तत्र पूजयेत्।।
शाक्रादृक्षात्समारभ्य नवम्यन्तञ्च पूर्ववत्।

ज्योतिःशास्त्रे पूजामन्त्रः

पान्तु वो वसवो रुद्रा आदित्याः समरुद्गणाः।
भर्त्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम्।।
अवाप्नुहि जयं युद्धे समये स्वस्तिनो व्रज।
श्रीस्ते सोमाद्वलं कृष्णात्तेजः सूर्य्याज्जवोऽनिलात्।।
स्थैर्य्यम्मेरोर्ज्जयो रुद्राद्यशो देवात्पुरन्दरात्।
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः।।
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा।

।। अथ षष्ठ्यां विल्वाभिमन्त्रणम्।।

तदुक्तं कालिकापुराणे

वोधयेद्विल्वशाखायां षष्ठ्योन्देवीम् फलेषु च।

तथा

ज्येष्ठायाञ्च समभ्यर्च्य मूलेन प्रतिपूजयेत्।
पूर्वोत्तराभ्यामभ्यर्च्च्य श्रवणान्ते विसर्ज्जयेत्।।

गौडनिवन्धे

ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां विल्वाभिमन्त्रणम्।

भविष्ये

षष्ठ्याम्विल्वतरौ वोधं सायंसन्ध्यासु कारयेत्।

।। अथ सप्तम्यां पत्रिकाप्रवेशविधिः।।

ज्योतिःशास्त्रे

आश्विनस्य सिते पक्षे सुमुहूर्त्तेन सप्तमी।
तस्याञ्च पत्रिकापूजा कर्त्तव्या नरनायकैः।।
प्रशस्तां सफलां विल्वे शाखामाहृत्य पूजयेत्।

"पूजयेत्" विल्वशाखायामेव, आहरणकर्म्मतया तस्या उपस्थितेः।

दुर्गापूजा च विल्वशाखायां विल्वे वा यस्तु पूजयेदित्यादि वाक्यान्तरात्।। "विल्वे बिल्वशाखायाम्" इति निवन्धव्याख्यानात्। अनाहृतायाः पूजाया अनुपपत्तेराहरणमपि सप्तम्यामेव कार्यम्, कालान्तरस्यानुपदेशात्।

शिष्टाः पठन्ति

कदली दाडिमी धान्यं हरिद्रा मानकं कचुः।
विल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिकाः।।
ब्रह्माणी कदली काण्डे दाडिमे रक्तचण्डिका।
धान्ये लक्ष्मीर्हरिद्रायां दुर्गा मानकपत्रके।।
चामुण्डा कालिका कच्च्यां शिवा बिल्वे प्रतिष्ठिता।
अशोके शोकरहिता जयन्त्यां कार्तिकी स्थिता।।

विल्वशाखया सह रम्भानिनवपत्रिका समाचारादपराजितालताबद्धाः स्नापयित्वा प्रवेशयेत्।

विल्वशाखया सह मृण्मयप्रतिमाप्रवेशनम् पूजनञ्चोक्तं देवीपुराणे

तस्मिन्देवी प्रकर्त्तव्या हैमी वा राजती तथा।
मृर्द्धाक्षीलक्षणोपेता विल्वे खड्गे च पूजयेत्।।

## ।। अथ महाष्टमीकृत्यम्।।

तत्राश्विनशुक्लाधिकारे ब्रह्मपुराणे

ब्रह्मोवाच

तत्राष्टम्याम्भद्रकाली दक्षयज्ञविनाशिनी।
प्रादुर्भूता महाघोरा योगिनीकोटिभिस्सह।।
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः।
उपोषितैर्व्वस्त्रधूपमाल्यरत्नानुलेपनैः।।
दीपैरन्यैस्तथा भक्ष्यैः फलैर्मूलैश्च धान्यकैः।
आमिषैर्विविधैः शाकैर्होमैर्ब्राह्मणतर्पणैः।।
विल्वपत्रैः श्रीफलैश्च चन्दनेन घृतेन च।

पशुभिः पानकैर्हृद्यै रात्रिजागरणेन च।।
प्रणेदुः शङ्खभेर्यश्च शतशोऽथ सहस्रशः।
हता दुन्दुभिनादाश्च पटशब्दाः समर्द्दलाः।।
पताकाध्वजसञ्छन्नं घण्टाचामरशोभितम्।
तद्दिनङ्कारयामासुर्द्देवीभक्ताः सुरोत्तमाः।।
एतस्मिँश्च दिने वत्स भूतप्रेतसमाकुले।
कृत्वा च सर्वदेवैश्च महापूजा च शाश्वती।।
आश्विने मासि मेघान्ते महिषारिनिवर्हणीम्।
देवीं सम्पूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च।।
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः।
बलिञ्च ये प्रयच्छन्ति सर्वभूतविनाशनम्।।
तेणन्तु तृप्यते देवी यावत्कल्पन्तु शाङ्करम्।

"सर्वभूतविनाशनम्" सर्वाणि भूतानि विहितमहिषमेषादीनि विनाश्यन्ते हन्यन्ते यस्मिन्बलौ तमित्यर्थः।

क्रीडन्ति विविधैर्भोगैर्द्देबलोकसुदुर्लभैः।।
नावयोव्याधयस्तेषां न च शत्रुभयम्भवेत्।
न च देवा ग्रहा दैत्या नासुरा न च पन्नगाः।।
पीडयन्ति सुराध्यक्षा देव्याश्च बलिदायकान्।
बलिक्षेपस्तु रक्षोभ्यः कार्यः सर्वारिशान्तये।।

कालिकापुराणे

कन्यासंस्थे रवाविषे या शुक्ला तिथिरष्टमी।
तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः।।
नवम्याम्बलिदानन्तु कर्तव्यं वै यथाविधि।
यज्ञ होमञ्च विधिवत्कुर्यात्तत्र विभूतये।।

उक्तञ्च देवीपुराणे

मातृणाञ्चैव देवीनां पूजा कार्या तदा निशि।

।। अथ महाष्टमीमहानवम्योः कृत्यसूचनम् ।।

देवीपुराणे

ब्रह्मोवाच

हते घोरे महावीरे सुरासुरभयंकरे।
देव्या उपासका देवाः प्रभूता राक्षसास्तथा।।
आगता घातितं दृष्ट्वा महिषन्तं सुदुर्जयम्।
ब्रह्मविष्णुसुरेशाना इन्द्रचन्द्रयमानिलाः।।
आदित्या वसवो रुद्रा ग्रहा नागाः सगुह्यकाः।
समेत्य सर्वे देवास्ते देवीम् भक्त्या प्रतुष्टुवुः।।
वरञ्च सर्वलोकानाम् प्रददौ भयनाशिनी।
बलिन्ददुश्च भूतानाम्महिषस्यामिषेण च।।
दुर्गागृहे तु शस्त्राणि पूजनीयानि पण्डितैः।
वाद्यभाण्डानि चिह्नानि कवचान्यायुधानि च।
रात्रौ च शिल्पिभिस्तानि स्वानि पूज्यानि सर्वदा।

देवीपुराणे

कन्यास्थे तु रवाविषे शुक्लाष्टम्याम् प्रपूजयेत्।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः।।
पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा।
पशुघातश्च कर्त्तव्यो गवलाजवधस्तथा।।
बलिक्षेपं सुरेशानां कृत्वा सर्वान्निशान्नयेत्।

"इषे" आश्विने। "वारुणे" शतभिषजि। "पशुः" अत्र गवलाजव्यतिरिक्तः। "गवलो" महिषः। "सुरेशानाम्" इन्द्रादि-लोकपालानाम्।

पुनर्देवीपुराणे

कन्यासंस्थे रवौ वत्स शुक्लाष्टम्याम्प्रपूजयेत्।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः।।

पूजां समारभेद्देव्या रक्षर्क्षे वारिभेऽपि वा।
पशोर्घातः प्रकर्त्तव्यो गवलाजस्य वाप्यथ।।

"रक्षर्क्षे" मूललक्षत्रे। "वारिभे" पूर्वाषाढे।

यावद्भूर्वायुराकाशं जलं बह्निशशिग्रहाः।
तावच्च चण्डिकापूजा भविष्यति सदा भुवि।।
प्रावृट्काले विशेषेण आश्विने ह्यष्टमीषु च।
महाशब्दो नवम्याञ्च लोके ख्यातिङ्गमिष्यति।।

"प्रावृट्काले" इति मासचतुष्टयात्मकवर्षाकालाभिप्रायेण।

एतत्ते देवराजेन्द्र स्वर्गवासफलप्रदम्।
परापरविभागेन क्रियायोगेन कीर्त्तितम्।।

## ।। अथ महाष्टमीमहानवम्योर्नवदुर्गापूजाविधिः।।

शिल्पिशास्त्रे

नवपद्मात्मके स्थाने पूज्या दुर्गाः स्वमूर्त्तिभिः।
आदौ मध्ये तथेन्द्रादौ नवतत्त्वाक्षरैः क्रमात्।।
अष्टादशभुजैः कान्तपीनवक्षस्थलोरुका।
मूर्द्धजं खेटकं घण्टामादर्शन्तर्ज्जनीन्धनुः।।
ध्वजं डमरुकम्पाशं विभ्रती वामके ततः।
शक्तिमुद्गरशूलञ्च बज्रङ्खड्गमथाङ्कुशम्।।
शरञ्चक्रं शलाकाञ्च एतैरेवायुधैर्युताः।
शेषाः षोडशहस्ताश्च तर्ज्जनीं डमरूं विना।।
रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका।
चण्डा चण्डवती चैव चण्डरूपाऽतिचण्डिका।।
नवमी चोग्रचण्डा च मध्यस्था च प्रकीर्तिता।
रोचनाङ्गारुणा कृष्णा नीला शुक्ला च धूम्रिका।।
पीता च पाण्डरा रक्ता आलीढस्था हरिस्थिता।

महिषोऽथमहानूशस्त्री तत्कचग्रहमुष्टिका।।
स्थाप्यावृत्तेन पंक्त्या वा इत्युक्तं स्कन्दयामले।
महिषघ्नि महामाये चामुण्डे मुण्डमालिनि।।
द्रव्यमारोग्यविजयन्देहि देवि नमः सदा।
रूपन्देहि यशो देहि भाग्यम्भगवति देहि मे।।
पुत्रान्देहि धनन्देहि सर्वान्कामान्प्रदेहि मे।

आदौ प्रथमतः मद्ममध्यस्था उग्रचण्डा अष्टादशभुजा कार्या पूज्या च। पूर्वादिदिगवस्थितास्तु षोडशभुजा रुद्रचण्डादयोऽष्टौ।

दुर्गे दुर्गे रक्षणि स्वाहेति नवतत्त्वाक्षराणि। पूजने चायम्मन्त्रः प्रणवादिः पठनीयः।

"खेटो" वधाफल इति प्रसिद्धः। "आलीढो" धनुस्थानविशेषः। "हरिः" सिंहः। "महिषोऽथ महानूशस्त्रीति" महिषो महिषासुरः।। अथ देव्या हते महिषशरीरे स पुनर्जातः खड्गहस्तो दर्शनीयः। "तत्कचग्रहमुष्टिका" तदीयमूर्द्धकचे कृतदृढमुष्टिः। "स्थाप्या वृत्तेन पंक्त्या वा" तदा देव्यो मण्डलाकारेण वा ऋजुपंक्त्या वा धार्याः।।

## ।। अथ सर्वमंगलापूजाविधिः।।

देवीपुराणे

मंगला नन्दिनी भद्रा लक्ष्मीः कीर्त्तिर्यशस्विनी।
पुष्टिर्मेधा शिवा साध्वी यशा शोभा जया धृतिः।।
आनन्दा च सुनन्दा च देव्यः षोडश कीर्तिताः।
एकैकेन तु वर्णेन देव्या मुद्राः प्रदर्शयेत्।।
ऐशान्यादीनि देयानि आयुधानि यथाविधि।

योनिमुद्रा लिङ्गमुद्रा व्यापिनी छत्रं गदा घण्टा दण्डः खेटकः शूलञ्चक्रम्पाशः खड्गं शरो धनुः पद्मं मुद्राः षोडश।

अतो मन्त्रपदानि भवन्ति -
ॐ कालि कालि वज्रे खरि लोहचण्डायै ठः टः मूलमन्त्रः।
ॐ कालि कालि ठः टः हृदयम्। ॐ कालि कालि बज्रिणि शिरः।
ॐ कालि कालेश्वरि शिखाम्। ॐ कालि बज्रेश्वरि कवचम्।
ॐ कालि लोहदण्डायै अस्त्रम्। मूलमन्त्रो नेत्रम्।
अनेन नेत्रेण पञ्च ब्राह्मण्यः।
सर्वमंगलमंगल्य इति पश्चात् स्थापयेत्।।

## ।। अथोग्रदण्डापूजा ।।

कालिकापुराणे

भगवानुवाच
उग्रदण्डा तु या मूर्तिरष्टादशभुजा भवेत्।
प्रदुर्भूता महाभागा योगिनीकोटिभिः सह।।
जटाजूटमखण्डेन्दुमुकुटत्रयभूषिता।
नागहारेण सहिता स्वर्णहारविराजिता।।
शूलं खड्गञ्च शङ्खञ्च चक्रम्बाणन्तथैव च।
शक्तिम्बज्रञ्च दण्डञ्च नित्यन्दक्षिणबाहुभिः।।
विभ्रती सततन्देवी विकासिनयनोज्वला।
खेटकं चर्म चापञ्च पाशञ्चाङ्कुशमेव च।।
घण्टाम् पर्शुञ्च मुशलं विभ्रती बामपाणिभिः।
दक्षिणाधो गदां बामपाणिना पानपात्रकम्।।
सुरापूर्णञ्च शिरसा मण्डलानि निवेशयन्।
भिन्नाञ्जनचयप्रख्या प्रचण्डा सिंहवाहिनी।।
रक्तनेत्रा महाकाया युक्ताऽष्टादशबाहुभिः।
अष्टम्यां रुधिरैर्मांसैर्महामांसैः सुगन्धिभिः।।
पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम्।

सिन्दूरैः पटवासैश्च नानाविधविलेपनैः।।
पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि।
पूजयित्वा महाष्टम्यां नवम्याम् बलिभिस्तथा।।
विसर्ज्जयेद्दशम्यान्तु श्रवणे शाबरोत्सवैः।
उपवासम्महाष्टम्याम् पुत्रवान्न समाचरेत्।।
यथातथैव पूतात्मा व्रती देवीं विसर्जयेत्।

## ।। अथ दशभुजापूजा ।।

रूपन्देव्या दशभुजं पूर्वमुक्तं विचिन्तयेत्।
पुष्पमारोप्य हस्तेन शारदामाऽऽह्वयेन्मुहुः।।
एह्येहि परमेशानि सान्निध्यमिह कल्पय।
पूजाभागं गृहाणेमं दुर्गे देवि नमोऽस्तु ते।।
दुर्गे दुर्गे इहागच्छ गणैः परिकरैः सह।
पूजाभागं गृहाणेमं मखं रक्ष नमोऽस्तु ते।।
नारायण्यै विद्महे त्वा चण्डिकायै तु धीमहि।
शेषभागे तु गायत्र्यास्तन्नश्चण्डी प्रचोदयात्।।
दत्वा स्नानमनेनैव दुर्गातन्त्रेण वै पुनः।
चतुरक्षरमन्त्रेण पाद्यादीनथ षोडश।।
वितरेदुपचारांस्तु पूर्पप्रोक्तांस्तु भैरव।
दुर्गातन्त्रेण मन्त्रेण देव्या अङ्गेन पूजयेत्।।
दुर्गे अनेन हृदयं पुनर्दुर्गे अनेन कम्।
शिखाकवचनेत्राणि बहुपादांश्च पञ्चभिः।।
वादिपञ्चाक्षरैश्शेषैः पूजयेत्क्रमशः सुधीः।
पूर्वभागे मण्डलस्य देव्याः शक्तीश्च पूजयेत्।।
उग्रचण्डाम् प्रचण्यडाञ्च चण्डोग्राञ्चण्डनायिकाम्।
चण्डाञ्चण्डवतीञ्चैव चण्डरूपाञ्च चण्डिकाम्।।

देव्यास्तु करगृह्याणि शस्त्रास्त्रादीनि वाहनम्।
पञ्चाननं कासरञ्च दैत्यमग्रे च पूजयेत्।।
जप्त्वा स्तुत्वा बलिन्दद्यान्नमस्कृत्यावगुण्ठ्य च।
योनिमुद्राम् प्रदर्श्याथ निर्माल्यं दिशि शूलिनः।।
चण्डेश्वर्यै नम इति निःक्षिप्य च विसर्जयेत्।

तथा

उग्रचन्डादिकाः पूज्या योगिन्योऽष्टौ तथा शुभाः।
योगिनीश्च चतुःषष्ठिं तथा वै कोटियोगिनीः।।
नवदुर्गास्तथाऽभ्यर्च्चेद्देव्याः सन्निहिताः शुभाः।
जयन्त्याद्या गन्धपुष्पैस्ता देव्या मूर्त्तयो यतः।।
देव्याः शस्त्राणि चास्त्राणि भूषणानि तथैव च।
अंगप्रत्यंगयुक्तानि वाहनं सिंहमेव च।।
महिषासुरमर्द्दिन्याः पूजयेद्भूतये सदा।

तथा

ग्रहाँश्च दशदिक्पालान् पूर्वोक्तेन क्रमेण च।
पूर्ववत्पूजयेद्धीमान् भैरवम् भैरवीमपि।।

तथा

दक्षिणे पूजयेदेताः चतुःषष्ठिं च योगिनीः।

।। अथ चतुःषष्ठिदेव्यः।।

देवीपुराणे

ब्रह्मोवाच

शृणु शक्र प्रवक्ष्यामि चतुःषष्ठिकरूपकम्।
महाभाग्यं विशेषेण धनधान्यसमन्वितम्।।
पूजयेद्विजयान्देवीं शूलपद्माक्षधारिणीम्।
वरोद्यतां सिंहसंस्थां सर्बसिद्धिप्रदायिकाम्।।

मंगलाम् पूजयेद्देवीं सर्वसिद्धिप्रदायिकाम्।
सिंहपद्मासनां सौम्यां जटामुकुटधारिणीम्।।
शूलाक्षसूत्रवरदामभयन्दक्षिणे करे।
भद्रान्तु पूजयेद्देवीम् भद्रासनगतां शुभाम्।।
नीलोत्पलकरां शूलाक्षसूत्रवरधारिणीम्।
धृतिं सम्पूजयद्देवीं चण्डासनव्यवस्थिताम्।।
पद्मदर्पणधारिर्णीं सर्वाभरणभूषिताम्।
शान्तिः शान्तिप्रदा कार्या पद्मासनव्यवस्थिता।।
अक्षसूत्रधरा देवी वरदोद्यतपाणिका।
शिवा वृषासना कार्या त्रिनेत्रा वरपाणिका।।
डमरूरगधारिणी सशूला चाभयप्रदा।
जटामुकुटखण्डेन्दु वासुकीकृतकंकणा।।
क्षमा पद्मासनस्था तु प्रतिसूर्योपपालिका।
मेखलाशूलसंयुक्ता योगपट्टोत्तरीयका।।
सिद्धिश्चण्डासना कार्या सिद्धार्थकवरप्रदा।
अथ पद्मासनस्था तु प्रतिसूर्योपशोभिता।।
तुष्टिञ्च पूजयेद्देवीं कलसोपरि संस्थिताम्।
पाशाङ्कुशधरां सौम्याम् पद्मस्वस्तिकधारिणीम्।।
उमा पद्मासना कार्या मृगसिंहपरावृता।
योगपट्टोत्तरासंगा कमण्डलुधरा शुभा।।
वरोद्यत त्रिशूलाक्ष जयाद्यैः परिवारिता।
ग्रहमाला विराजन्ती पत्रकुण्डलधारिणी।।
शिवार्च्चन रता देवी पुष्टिः कार्या यथा शृणु।
खड्गहस्ता महारूपा चर्ममुद्गरधारिणी।।
अश्वारूढा स्वरूपाद्या पुष्टिरेवंविधा भवेत्।
श्रिया पद्मासना कार्या पद्मश्रीफलधारिणी।।
गजैर्गृहीतकलशैः स्नाप्यमाना सुशोभना।

ऋद्धिं पूजय पद्मस्थां वरदाभयपाणिकाम्।।
दानोद्यतकरान्देवीं व्याहरन्तीं शुभानि च।
वीणावाद्येन पद्मस्था रतिः कार्या सुलोचना।।
दीप्ता चण्डासना कार्या किरणोज्ज्वलधारिणीम्।
सिंहासनगता वाऽपि पद्महस्ता सुशोभना।।
नीलोत्पलस्थिता कान्तिः कमलोत्पलधारिणी।
शृंखलाभूषिता देवी सर्वाभरणचर्च्चिता।।
पर्य्यङ्कोदरसंस्था तु यशा कार्या सुशोभना।
शङ्खपुस्तकधारी च शृङ्खलाभरणोज्वला।।
लक्ष्मीः मद्मासना कार्या पद्मश्रीफलधारिणी।
ईश्वरी वृषभस्था तु जटामुकुटधारिणी।।
चन्द्रार्धशेखरादेवी त्रिशूलोरगभूषणा।
कलशस्था भवेद् वृद्धिर्बीजपूरकधारिणी।।
योगपट्टोत्तरासंगा रत्नमालाधरा शुभा।
शाक्री गजासना कार्या बज्रहस्ता सुशोभना।।
जयावती सिंहसंस्था शरशृंगधरा शुभा।
हंसासना भवेद्ब्राह्मी मुञ्जमेखलधारिणी।।
चतुर्वक्त्रा सुरूपाढ्या दण्डकाष्ठं कमन्डलुम्।
अक्षसूत्रञ्च बिभ्राणा स्रुवहस्ताऽब्जधारिणी।।
योगपट्टकखट्वांगी सवेदोद्गी रणानना।
जयन्ती नकुलस्था तु कुन्तलशूलकरा शुभा।।
खड्गखेटकरा कार्या वरदाभयपाणिका।
अपराजिता तु कर्त्तव्या सिंहारूढा महाबला।।
पिनाकशरहस्ता च खड्गखेटकधारिणी।
त्रिनेत्रा सजटाजूटा कृतवासुकिभूषणा।।
पद्माङ्कुशकरा देवी अजिता मकरासना।
रथस्था मानसी कार्या घण्टामुद्गरधारिणी।।

बज्राङ्कुशकरा देवी सर्वाभरणभूषिता।
श्वेतपंकजसंस्था तु सूत्रदण्डाक्षधारिणी।।
दितिर्दण्डधरा कार्या सर्वाभरणभूषिता।
फलनीलोत्पलकरा उत्सङ्गे बालकान्विता।।
मायापाशांकुशकरा मायाचामरधारिणी।
शूकरस्था महामाया मोहयन्ती चराचरम्।।
मोहनी मृगमारूढा ध्वजशूलाक्षधारिणी।
वेणुहस्ता सुरापात्रहारकेयूरभूषिता।।
लालसा गजसंस्था तु मालादर्पणधारिणी।
तारा शकटमारूढा विमला ह्यवर्चसा।।
मुक्ताक्षसूत्रधारी च कमण्डलुकरा शुभा।
गौरी पद्मासनस्था तु वरदाभयपाणिका।।
अक्षसूत्रकरा देवी कमण्डलुधरा शुभा।
शरण्या सिंहमासीना वरदाभयपाणिका।।
कौशिकी कौशिकारूढा त्रिशूलमुण्डधारिणी।
कपालकर्तिकाहस्ता घोररूपा महाबला।।
मतिर्मनस्था कर्त्तव्या सर्वाभरणभूषिता।
वीणावादनशीला च नृत्यमाना सुशोभना।।
दुर्गा दिग्गजमत्तारिपृष्ठगा रिपुसूदिनी।
पिनाकशरचर्मासिधारिणी महिषापहा।।
तच्छीर्षोत्त्थमहाकायैस्तद्भटैः परिवारिता।
रक्तस्रुद्रक्तनेत्रैश्च तर्ज्जिता तन्महावलैः।।
वेष्टिता नागपाशेन केचिच्छिन्ना गतासवः।
देवीशूलगताः कार्याः सर्वे ते सम्मुखाननाः।।
पदम् पद्मासने चैकमेकं सिंहेनिवेशितम्।
एवं विधेन रूपेण दुर्गा कार्या न चान्यथा।।
पट्टोपरि समासीना क्रिया कार्या सुशोभना।

पुष्पमालाविराजन्ती प्रभामण्डलभूषिता।।
स्रुवमेखलधारी च सर्वशोभासमन्विता।
व्रतस्थाऽरुन्धती कार्या पुष्पोदककरा शुभा।।
घण्टान्तु पूजयेद्देवीं घण्टाहस्तां त्रिशूलिनीम्।
कर्णा सुरूपा कर्तव्या सकर्णा तु सुशोभना।।
पद्माक्षसूत्रधारी च महाव्रतधरा शुभा।
कपालिनी सदा कार्या कपाल-शूलधारिणी।।
रुद्ररूपा तथा रौद्री वृषसंस्था सुशोभना।
जटामुकुटसार्धेन्दुःकृतवासुकिकङ्कणा।।
रथस्थाम्पूजयेत्कालीङ्कपालशूलधारिणीम्।
मयूरी शिखिसंस्था तु पाशशक्तिधरा शुभा।।
त्रिनेत्रा शक्र कर्त्तव्या सर्वाभरणभूषिता।
दण्डासनसमारूढां पद्मस्वस्तिकधारिणीम्।।
सुरूपाम् पूजयेद्देवीं हारकेयूरभूषिताम्।
शूलखड्गधरां देवीं वहुरूपां नरासनाम्।।
त्रिनेत्राम् पूजयेद्देवीं शूलपट्टिशधारिणीम्।
जटोरगशिरश्चन्द्रभूषितां शिवरूपिणीम्।।
रिपुहा शत्रुनाशार्थं वज्रचक्रधनुर्धरा।
अश्वारूढा तथा कार्या सर्वाभरणभूषिता।।
अम्बिकां शूलसूत्राक्षधारिणीम् पूजयेत्तथा।
पद्मासनस्थां देवेन्द्र चर्चितां साम्प्रतं शृणु।।
प्रेतारूढाम् महादेवीं नागाभरणभूषिताम्।
ऊर्ध्वकेशीं करालीन्तु मुण्डकर्त्तिकधारिणीम्।।
सुरपूजिता तु कर्त्तव्या गजारूढा महाबला।
रक्ताङ्कुशधरा देवी तथा वैवस्वतीं शृणु।।
कपालदण्डहस्तान्तु शूकरास्याय्यँमासनाम्।
कौमारी पूज्यते शक्र मयूरासनशक्तिभृत्।।

त्रिदण्डी बालरूपा तु रक्तमाल्या सकुक्कुटा।
माहेश्वरी वृषारूढा त्रिनेत्रा शूलधारिणी।।
वीणावादनशीला च हारकेयूरभूषिता।
शङ्खचक्रधरा पूज्या वैष्णवी गरुडासना।।
बनमालाधरां देवीम् महालक्ष्मीन्तथा शृणु।
गगनोद्भासिशूलाञ्च नृत्यमानां कपालिनीम्।।
सौम्याननां सुसम्पूर्णां त्रिनेत्राम् मुण्डभूषिताम्।
तस्याः संमुखगा कार्या कार्त्तिकी प्रेतसंस्थिता।।
वामदक्षिणगौ कार्यौ शूलोत्पलधरौ नरौ।
सिंहपद्मासना देवी वृषप्रेतासनाऽथ वा।।
कौशिकी सिंहयाने वा कपालशूलधारिणी।
शिवदूती प्रकर्त्तव्या यौवनाभरणोज्ज्वला।।
शिवा वज्राङ्कुशधरा निर्मांसा कोटरेक्षणा।
अविरलौ तथैवोष्टौ विकेशा नागबन्धना।।
मुद्रालङ्कृतकर्णा तु वामोरुकरसंस्थिता।
पीठसंस्थेन याम्येन तथा च विकृताननना।।
चामुण्डा पूज्यते देवी ऊर्ध्वकेशी भयानका।
प्रेतसंस्था निर्मांसा मालाखट्वाङ्गधारिणी।।
कपालशूलहस्ता च कर्णिकाभरणोज्चला।
मुद्रावस्थेऽधरे चौष्ठे संस्थिता वामकाङ्गुलिः।।
गजचर्माम्बरा रौद्री नागाभरणभूषिता।
चतुःषष्ठेस्तु देवीनां रूपकं कथितं तव।।
साम्प्रतञ्च सुराध्यक्ष महाभाग्यं वदाम्यहम्।

ब्रह्मोवाच

यथा शिवस्य नैवान्तो विद्यते शक्र पूजने।
तथा चान्तन्न पश्यामि चतुषष्ठैस्तु पूजनात्।।

सुवर्णभूमिदानस्य गोदानस्य च यत्फलम्।
फलन्तदधिकं शक्र चतुःषष्ठेः स्मृतेरिह।।
प्रासादे मण्डपे गेहे चित्रे वस्त्रे च लेखिता।
चतुःषष्ठिर्महाभाग पूजिता राज्यदा शुभा।।
चतुःषष्ठिम्प्रतिष्ठाप्य द्वात्रिंशत् षोडशाथवा।
वसुसङ्ख्यामथापीन्द्र सर्वन्तरति दुष्कृतम्।।

तथा मातृचक्रम् मत्स्य पुराणे

मातृणां लक्षणं वक्ष्ये यथावदनुपूर्वशः।
ब्रह्मणा ब्रह्मसदृशी चतुर्वक्त्रा चतुर्भुजा।।
हंसारूढा च कर्त्तव्या साक्षसूत्रकमण्डलुः।
महेश्वरस्य रूपेण तथा माहेश्वरी मता।।
जटामुकुटसंयुक्ता वृषस्था चन्द्रशेखरा।
कपालशूलखट्वाङ्गवरदाऽथ चतुर्भुजा।।
कुमाररूपा कौमारी मयूरवरवाहना।
रक्तवस्त्रधरा तद्वच्छूलचक्रधरा तथा।।
हारकेयूरसम्पन्ना कृकवाकुधरा तथा।
वैष्णवी विष्णुसदृशी गरुडासनसंस्थिता।।
चतुर्बाहुश्च वरदा शङ्खचक्रगदाधरा।
सिंहासनगतावाऽपि बालकेन समन्विता।।
वाराहीञ्च प्रवक्ष्यामि महिषोपरि संस्थिताम्।
वराहसदृशीन्देवीं घण्टाचामरभूषिताम्।।
गदाचक्रधरां तद्वद्दानवेन्द्रविनाशिनीम्।
इन्द्राणीमिन्द्रसदृशीं वज्रशूलगदाधराम्।।
गजारूढान्तु तान्देवीं लोचनैर्बहुभिर्वृताम्।
तप्तकाञ्चनवर्णाभां वस्त्राभरणभूषिताम्।।
तीक्ष्णखड्गधरां तद्वद्वक्ष्ये योगीश्वरीमिमाम्।

दीर्घजिह्वामूर्ध्वकेशीमस्थिखण्डैश्च मण्डिताम्।।
दंष्ट्राकरालवदनां कुर्याच्चैव कृशोदरीम्।
कपालमालिनीं देवीम् मुण्डमालाविभूषिताम्।।
कपालं वामहस्ते तु मांसशोणितपूरितम्।
सकेशञ्च शिरोऽन्यस्मिन् शस्त्रिकां दक्षिणे तथा।।
गृध्रस्था वा शवस्था वा निर्मांसा विगतोदरी।
करालवदना तद्वत्कर्त्तव्या सा त्रिलोचना।।
चामुण्डा वद्धघण्टा च द्वीपिचर्मधरा शिवा।
दिग्वासा कालिका तद्वद्रासभस्था कपालिनी।।
सुरक्तपुष्पाभरणा वर्धनीध्वजसंयुता।
विनायकञ्च कुर्वीत मातृणामन्तिके तथा।।
वीरेश्वरश्च भगवान् वृषारूढो जटाधरः।
वीणाहस्तस्त्रिशूली च मातृणाम् पुरतो भवेत्।।

देवीपुराणे

मातरः पूजनीयास्तु दृष्टादृष्टफलार्थिना।
गन्धनैवेद्यधूपेन बलिमालाविभूषणैः।।
तथा मातृगणम् पूज्य देवम् भैरवरूपिणम्।
स्त्रीसङ्घकन्यकाविप्राः पूजनीयाश्च शक्तितः।।

पञ्चरात्रे

ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णवी स्मृता।
वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी तथा।।
अष्टमी स्यान्महालक्ष्मीः प्रोक्ता स्युर्विश्वमातरः।

कालिकापुराणे

चण्डिकातन्त्रमन्त्रस्य योगिन्योऽष्टौ प्रकीर्त्तिताः।
ब्रह्माणी प्रथमा प्रोक्ता ततो माहेश्वरी परा।।

कौमारी वैष्णवी चैव वाराही च तथा परा।
नारसिंही तथैवैन्द्री शिवदूती तथाऽष्टमी।।
भैरवः पाण्डुनाथश्च रक्तगौरश्चतुर्भुजः।
गदाम् पद्मञ्च शक्तिञ्च चक्रञ्चापि करेषु च।।
विभ्रद्देव्याः पुरोभागे पूज्योऽयं विष्णूरूपधृक्।

कालिकापुराणे महिषासुरम् प्रति देव्युवाच

मम प्रवर्त्तते पूजा यत्र यत्र च तत्र ते।
पूज्यश्चिन्त्यश्च तत्रैव कायोऽयन्तव दानव।।

यथा मात्स्ये दशभुजास्त्राणि

त्रिशूलं दक्षिणे देव्याः खड्गं चक्रं तथोर्ध्वतः।
तीक्ष्णवाणन्तथा शक्तिं वामतोऽपि निबोधत।।
खेटकम्पूर्णचापञ्च पाशमङ्कुशमेव च।
घण्टां वा परशुं वाऽपि वामेऽधः सन्निवेशयेत्।।

देवीपुराणे

द्विभुजदेव्यस्त्राणि

खड्गखेटधरा देवी पाशशूलधराऽपरा।
धनुर्वाणधरा चान्या घण्टाचक्रधरोद्यता।।
वज्रदण्डधरा देवी दशबाहुरथापरा।
कर्त्रिकाम्मुद्गरङ्कुन्तङ्कुठारन्तर्ज्जनींपुरः।।
डमरून्धारयन्ती च शक्तिहस्ता महाबला।
पद्माभयकरा देवी दर्पणंविंशकेकरे।।
एवंविधस्वरूपा तु सिंहस्योपरि संस्थिता।
महामाया प्रकर्त्तव्या सिंहयुग्मगताऽथवा।।
पद्मासनस्था वरदा नवयौवनभाविता।
सर्वावयवशोभाढ्या जयाद्यैरूपशोभिता।।

अथवा युध्यमाना सा महिषासुरघातिनी।
ध्याता प्रपूजिता नित्यं सर्वकामफलप्रदा।।

## ।। अथ महानवमीकृत्यविधिः।।

भविष्यपुराणे

सुमन्तुरुवाच
नवम्यां श्रीसमायुक्तादेवैः सर्वैः प्रपूजिता।
जघान महिषन्दुष्टमवध्यन्देवतादिभिः।।
लब्ध्वाभिषेकं वरदा शुक्ले चाश्वयुजस्य तु।
तस्मात् सा तत्र सम्पूज्या नवम्यां चण्डिका बुधैः।।
महत्त्वं हि यतः प्राप्ता तत्र देवी सरस्वती।
ततोर्थम्महती प्रोक्ता नवमीयं सदा बुधैः।।
पूजयित्वा महादेवीं नवम्यामत्रचण्डिकाम्।
महत्त्वम्प्राप्तवान् वीर ब्रह्माविष्णुस्तथाऽमराः।।
तस्मादियम् महापुण्या नवमी पापनाशिनी।
उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः।।
मूलोत्तरेण ऋक्षेण संयुक्ता विधिवन्नृप।
विशेषतोऽध्वजीव्यैश्च वालवृद्धैः सयौवनैः।।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च सेवकैः।
अत्र दानानि देयानि सोपवासैर्न्नरैर्नृप।।
गोसुवर्णानि राजेन्द्र वस्त्राणि विविधानि च।
स्वमांसरुधिरैर्द्दत्तैर्द्देवी तुष्यति वै भृशम्।।
महिषच्छागमेषाणां रुधिरेण तथा नृप।

सर्वमेतस्य दानस्य फलमग्रे वक्ष्यते

तथा

पूजयित्वा तु तान्देवीं श्रद्धया सर्वमङ्गलाम्।

घृताभिषेकं यः कुर्यादहोरात्रन्नराधिप ।।
श्लक्ष्णधारेण ताम्रेण भगवत्या विचक्षणः ।
मासि चाश्वयुजे वीरे नवम्यां श्रद्धयाऽन्वितः ।।
गीतनृत्यनिनादैश्च शङ्खवादित्रनिस्वनैः ।
कुर्याज्जागरणचैञ्व नानापुष्पोपशोभया ।।
सर्वपापविनिर्मुक्तो दिव्यस्तेजोमयस्तथा ।
मोदते दुर्गया सार्धन्दुर्गालोके महीयते ।।
नवम्यां शुक्लपक्षे तु सोपवासपरो नृप ।
स्नापयित्वा घृतेनार्यां सर्वपापैः प्रमुच्यते ।।

## ।। अथ त्रिशूलिनीपूजा ।।

भविष्यपुराणे

सुमन्तुरुवाच
हन्ते ते वच्मि परमं रहस्यम्पापनाशनम् ।
धर्म्यं यशस्यमायुष्यं सर्वदेवैरनुष्ठितम् ।।
काष्ठं वा काञ्चनं वाऽपि त्रिशूलञ्चण्डिकात्मकम् ।
स्नापयित्वा नरो भक्त्या कुङ्कुमेनावलिप्य च ।।
श्वेतैर्विकसितैः पुष्पैः पूजयित्वा प्रणम्य च ।
गजे रथे हये वाऽपि वृषभे वा नराधिप ।।
आरोप्य तम्महाबाहो मणिकाञ्चनभूषितम् ।
नानावादित्रनिर्घोषैर्ब्राह्मघोषैश्च पुष्कलैः ।।
नयेदायतनन्देव्याःकृतशोभं समन्ततः ।
दुर्गायाः परतः स्थाप्य विल्वपत्रैश्च पूजयेत् ।।
प्रणम्य शिरसा देवीं स्तुत्वा चैव क्षमापयेत् ।
अनेन विधिना देवीम्पूजयित्वा तु चण्डिकाम् ।।
ब्रह्मेन्द्ररुद्रविष्ण्वाद्यैः प्राप्तन्तु परमम्पदम् ।

य एवम्पूजयेद्देवीं त्रिशूलाकृतिमादरात्।।
मुच्यते स नरः पापैर्ब्रह्मलोकञ्च गच्छति।
एतन्महाव्रतम्पुण्यं शूलपूजाख्यमुत्तमम्।।
भक्तस्य ते मया ख्यातं महापातकनाशनम्।

तथा

मासि चाश्वयुजे वीर शुक्लपक्षे त्रिशूलिनीम्।
नवम्याम्पूजयेद्यस्तु तस्य पुण्यफलं शृणु।।
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
तत्फलं लभते वीर दिवि देवगणैर्वृतः।।

देवीपुराणे

ब्रह्मोवाच

व्यक्ताव्यक्ताकृतिं कृत्वा हेमरूप्यमयीं शिवाम्।
त्रिशूले पूजयेद्वत्स स्नाप्य कापोतवारिणा।।
चन्दनागुरुगन्धाढ्यां स्रग्धूपैश्च प्रधूपिताम्।
सकृदिष्ट्वाऽशुभं हन्यात्सप्तजन्मकृतम्मुने।।

"इष्ट्वा" सम्पूज्य। "कापोतवारिणा" तीर्थजलेन।

तदुक्तम्

पोतन्नाम शुभंख्यातम्पापङ्कर्म तु कम्मतम्।
यस्मात्कात्तारयेल्लोकान्कापोतन्तेन कीर्त्यते।।

## ।। अथ मातृचक्रपूजा।।

देवीपुराणे

मातृणाञ्च सदा चक्रं हेमराजतताम्रजम्।
पूजितं विधिना शक्र संवत्सरतमोपहम्।।

“तमः” पापम्।

अन्ये च मुनिश्रेष्ठ द्विजोभूपा विशोऽथवा।
शूद्रा वा भक्तिमास्थाय पूजयिष्यन्ति मातरः।।

“मातरः” मातृः सुवूव्यत्ययात्।

न तेषां विप्र राष्ट्रेषु भयं किञ्चिद् भविष्यति।
गावश्च भूरिपयसो द्विजा यज्ञसमाकुलाः।।
निवृत्तवैरा भूपाला भविष्यन्ति न संशयः।
सुभिक्षं क्षेममारोग्यम्पर्जन्यः कामवृष्टिदः।।
भवेत् सस्यस्य सम्पत्तिर्म्मातृणाम्पूजनात्सदा।

सदेतिफलेन सम्बध्यते। प्रत्यब्दम्पूजनेऽब्दस्यापि फलम्।

एकाहमपि ये भक्त्या कन्यासंस्थे दिवाकरे।।
पूजयित्वा शिवाचक्रं दीपान् सम्बोधयन्ति च।
ते लभन्ते शुभान् लोकानायुरारोग्यसम्पदः।।

सम्बोधनमुत्तेजनम्।

सन्ध्याकाले तु सम्प्राप्ते पूजयित्वा तु मातरः।
ये ददन्ति घृतैर्द्दीपानुत्करम्पललान्वितम्।।
न तेषान्दुःकृतङ्किञ्चिद्विद्यते मुनिसत्तम।

“मातरः” ब्रह्माण्याद्याः प्रागुक्ता एव। “उत्करम्” माषमिश्रभक्तम्। “पललम्” मांसम्।

भविष्यपुराणे

भक्ष्यभोज्यैरनेकैस्तु मद्यमांससमन्वितम्।
सन्ध्याकाले नवम्यां यो बलिङ्कुर्य्यान्नराधिप।।
चण्डिकायतनेभक्त्या महिषाजनिपातनैः।
स गच्छति परस्थानं यत्र सा चण्डिका स्थिता।।

## ।। अथ कुमारिकापूजा ।।

देवीपुराणे

ब्रह्मोवाच

न तथा तुष्यते शक्र होमदानजपेन तु।
कुमारीभोजनेनात्र यथा देवी प्रसीदति।।
पितरो वसवो रुद्रा आदित्या गणलोकपाः।
सर्वे ते पूजितास्तेन कुमार्यो येन पूजिताः।।
शुक्लाष्टमीचतुर्द्दश्योर्न्नवम्याञ्च विशेषतः।
कृष्णपक्षे विशेषेण भोजयेत्तु कुमारिकाः।।
प्रक्षाल्य पादौ सर्वासां कुमारीणाञ्च वासव।
सुलिप्ते भूतले रम्ये तत्र ता आसने स्थिताः।।
पूजयेद्गन्धपुष्पैश्च स्रग्भिश्चापि मनोहरैः।
पूजयित्वा विधानेन भोजनन्तासु दापयेत्।।
खण्डलड्डुगुणं सर्पिर्द्दधि क्षीरं समाक्षिकम्।
तासन्देयङ्कुमारीणां शनैर्भुञ्जापयेत्तु ताः।।
पानीयं याचितन्देयमन्नं वा याचितं शुभम्।
तास्तृप्तासु यदा सर्वास्तदा स्वाचमनन्ददेत्।।
आचम्य चाक्षतान्दत्वा क्षन्तव्यमित्युत।
दातुः शिरसि दातव्या कन्यकाभिरथाक्षताः।।
तेनापि प्रणिपातस्तु कर्त्तव्यो भक्तिपूर्वकः।
अनेन विधिना शक्र देवी क्षिप्रम् प्रसीदति।।
ददाति विविधान्कामान्मनोभीष्टान्सुराधिप।
राज्यङ्कृत्वा ततः पश्चाद्देवलोकञ्च गच्छति।।

## ।। अथ बलिदानम् ।।

कालिकापुराणे

प्रभूतबलिदानञ्च नवम्यां बिधिवच्चरेत् ।

देवीपुराणे

बलिञ्च ये प्रयच्छन्ति सर्वभूतविनाशनम् ।
तेषान्तु तुष्यते देवी यावत्कल्पन्तु शाङ्करम् ।।

''सर्वभूतविनाशनम्'' महिषादिच्छेदबहुलम् ।

तथा

नवधा पशुघातञ्च महिषाजाविघातनम् ।
कर्त्तव्यम् भूतवेताले नवम्यान्नात्मकाम्यया ।।

भूतबेतालनिमित्तं नात्मभोगार्थमित्यर्थः ।

कालिकापुराणे

पक्षिणः कच्छपा ग्राहा वराहाश्छागलास्तथा ।
महिषो गोधिका मेषस्तथा नवविधा मृगाः ।।

''नवविधाः'' कृष्णसाररुरुप्रभृतयः ।

मार्कण्डेयपुराणे

ददतुस्तौ बलिञ्चैव निजगात्रासृगुक्षितम् ।

भविष्यपुराणे

सहस्रन्तृप्तिमायाति स्वदेहरुधिरेण तु ।
तर्पिता विधिवद्दुर्गा भित्वा बाहू च जङ्घके ।।

कालिकापुराणे

अजश्च महिषश्चैव नरश्चैव यथा क्रमात् ।
बलिर्म्महाबलिश्चातिबलिश्चेति प्रकीर्त्तिताः ।।

भविष्ये

नारेण शिरसा वीर विधिवत्पूजिता नृप।
तृप्ता भृशम्भवेद् दुर्गा वर्षाणां लक्षमेव च।।

कालिकापुराणे

शोणितम्मन्त्रपूतन्तु शीर्षम्पीयूषमुच्यते।
तस्मात्तु पूजने दद्याद्बलेःशीर्षञ्च शोणितम्।।

भविष्येऽपि

पूजयेद्विधिवद्भक्त्या चामुण्डाम् मुण्डसूदनीम्।
रुधिरेण तथा वीर शिरोभिर्विविधैर्नृप।।
अजाविमहिषाणाञ्च स्वदेहस्य च भेदनात्।

कालिकापुराणे

छिन्नलाङ्गूलकर्णादिभग्नदन्तन्तथैव च।
भग्नशृङ्गादिकञ्चापि न दद्यात्तु कथञ्चन।।

तथा

काणं व्यङ्गं चातिबृद्धं रोगिणञ्च गलद्व्रणम्।
क्लीवं हीनाङ्गमथवा विद्धलिङ्गं स्रवत्कफम्।।
न च त्रैमासिकान्न्यूनम्पशुन्दद्याच्छिवाबलिम्।
न च त्रैपक्षिकान्न्यूनं प्रदद्याद्वै पतत्रिणम्।।
पशूनाम्पक्षिणां वाऽपि नराणाञ्च विशेषतः।
स्त्रियन्न दद्यात्तु वलिं दत्वा नरकमाप्नुयात्।।
अनुक्तन्नापि दद्यात्तु तथाऽज्ञातान्मृगद्विजात्।

अथ देवीपुराणे

पञ्चाब्दं लक्षणोपेतङ्गन्धधूपस्रगर्च्चितम्।
विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत्।।

"लक्षणोपेतम्" वध्यदोषरहितम्।

## ।। विधिः।।

कालिकापुराणे

भगवानुवाच

उत्तराभिमुखो भूत्वा बलिम् पूर्वमुखन्तथा।
निरीक्ष्य साधकः पश्चादिमम्मन्त्रमुदीरयेत्।।
नर त्वम् बलिरूपेण मम भाग्यादुपस्थितः।
प्रणमामि ततः सर्व सिद्धिदम् बलिरूपिणम्।।
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम्।
चामुण्डाबलिरूपाय बले तुभ्यन्नमोऽस्तु ते।।
यज्ञार्थे बलयः सृष्टाः स्वयमेव स्वयम्भुवा।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः।।
ऐंह्रींश्रीमिति मन्त्रेण तमूबलिम्मत्स्वरूपिणम्।
चिन्तयित्वा न्यसेत्पुष्पम् मूर्द्धिन तस्य तु भैरव।।
ततो देवीं समुद्दिश्य कामऺुद्दिश्य चात्मनः।
अभिषिच्य ततः पश्चात्करबालन्तु पूजयेत्।।
रसनात्वं चण्डिकायाः सुरलोकप्रसाधकः।
ह्रींह्रींस्वङ्गेति मन्त्रेण ध्यात्वा खड्गञ्च पूजयेत्।।

ध्यानं यथा

कृष्णम् पिनाकपाणिञ्च कालरात्रिस्वरूपिणम्।
उग्ररक्तास्यनयनं रक्तमाल्यानुलेपनम्।।
रक्ताम्बरधरञ्चैकपाशहस्तं कुटुम्बिनम्।
पिवमानञ्च रुधिरमूभुंजानं द्रव्यसंहतिम्।।
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः।

श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तुते।।
पूजयित्वा ततः खड्गं आँहूँफडिति मन्त्रकैः।
गृहीत्वा विमलं खड्गं छेदयेद्बलिमुत्तमम्।।
ऊँ ऐं ह्रीं श्रीं कौशिकीति रुधिरेणाप्यायतामिति।
स्थाने नियोजयेद्रक्तं शिरश्च सप्रदीपकम्।।
एवं दत्वा बलिम् पूर्णम् फलम् प्राप्नोति साधकः।
हीनन्तु स्याद्धीनतायां निःफलं स्याद्विपर्ययात्।।
अन्येषाम् महिषादीनाम् बलीनामथ पूजनात्।
कायो मेध्यत्वमायाति रक्तं गृह्णाति वै शिवा।।
बलिदाने तु दुर्गायाः सर्वत्रायं विधिः स्मृतः।

देवीपुराणे

दैत्यानाम् मत्स्यमांसानि देवीनाम् पललौदनम्।

कालिकापुराणे

कूष्माण्डमिक्षुदण्डश्च मद्यमासव एव च।
एते बलिसमा ज्ञेयास्तृप्तौ छागसमा समाः।।
चन्द्रहासेन कट्टारैश्छेदनम् मुख्यमिष्यते।
दात्रासिधेनुक्रकचशङ्गुलाभिस्तु मध्यमम्।।

"असिधेनुः" छुरिका। "शङ्गुला" कर्त्तरी।

क्षुरक्षुरप्रभल्लैश्च अधमम् परिकीर्त्तितम्।
एभ्योऽन्यैः शक्तिशूलाद्यैर्बलिश्छेद्यः कदापि न।।
नात्ति देवी बलिन्तन्तु दाता मृत्युमवाप्नुयात्।
बलिदाने बलिं छित्वा खड्गस्थै रुधिरैः स्वके।।
सर्वमन्येन मन्त्रेण ललाटे तिलकं न्यसेत्।
राजा वा राजपुत्रो वा स्त्रियो वा यक्षराक्षसाः।।
सर्वे तस्य वशं यान्ति भूतग्रामश्चतुर्विधः।

## ।। अथ नीराजनम्।।

ब्रह्मपुराणे

नवम्यान्तु कृतस्नानैः सर्वैः पूज्या द्विजातयः।
भुक्त्वा तु शान्तिः कर्तव्या योगे गोधूलिनामनि।।
यदुक्तं शालिहोत्रे च ज्योतिःशास्त्रे च यन्मतम्।
अथर्ववेदे यत्प्रोक्तं तत्र तच्च समाचरेत्।।
क्षिप्त्वा सकुक्कुटं छागं कृत्रिमे दारु वेश्मनि।
श्रवणे वाऽथ सन्ध्यायां निर्द्दहेत्तु गृहन्ततः।।
निर्द्दह्यमानौ तौ तत्र निर्गछन्तौ विभावयेत्।
दिशं शान्ताम् प्रदीप्तां वा तत्फलञ्च प्रयच्छतः।।
द्रष्टव्या आत्तशस्त्राश्च राज्ञा नीराजने जनाः।

## ।। अथ शालिहोत्रीयतुरगनीराजनविधिः।।

नीराजिते तुरङ्गे कृते च लौहाभिहारिके यज्ञे।
अभिषिक्ते राजाश्वे ततो नृपाणां भवेद्यात्रा।।
"लौहाभिहारिके" नीराजनाप्रयोजनकहोमे।
अश्वयुजि शुक्लपक्षे तिथौ द्वितीयादि सप्तरात्रन्तु।
वडवारूपेणैका स्वातिः सौरं रथं वहति।।
सा भारेणाक्रान्ता क्रुद्धा यान्यान् निरीक्षते वाहान्।
तेषां तेजः सत्त्वं बलञ्च कृत्स्नं निगृह्णाति।।
संजायन्ते रोगा महोपसर्गैः समन्विताः कष्टाः।
तस्मात् स्वात्युपतापे वाजिषु पीडा भवेन्महती।।
एवञ्च सप्तरात्रं स्वातेः सम्पात एष निर्द्दिष्टः।
तत्र दिवाकरकिरणैरस्पृष्टा वांजिनो रक्ष्याः।।
शालान्तदोपलिप्तां मनोरमां वर्ज्जिताञ्च रविकिरणैः।

नानाकारैः पुष्पैरलङ्कृतान्धूपितां कुर्य्यात्।।
तस्यां स्नातास्तुरगाः सुधूपिता अर्च्चिता द्वितीयायाम्।
पुरुषैश्च शस्त्रहस्तैः सप्ताहं रक्षितव्यास्तु।।
गुग्गुलुहिङ्गुवयस्थाः सवचापामार्गतण्डुलंलौहम्।
सिद्धार्थांश्चेलस्थान् बध्नीयाद्वाजिनः कण्ठे।।

"वयस्था" आमलकी। "अपामार्गतण्डुलाः" तद्वीजानि। "चेलस्थान्" नववस्त्रबद्धान्।

देवीञ्च कल्पयित्वा धुरि चविधानेन पावकं जुहुयात्।

"धुरि" शालाशिरोभागे। "विधानेन" वक्ष्यमाणेन।

सायं प्रातश्च शुचिः पुरोहितो ब्रह्मचारी स्यात्।।
शालिहोत्रगदितेन मन्त्रेणानेन होमयेत्।
रोहिताश्व महाभाग हव्यवाडमरोत्तम।।
धूमध्वज क्रतुद्वार स्वर्गस्य प्रथितःपथि।
उत्तिष्ठ होमं गृह्णेमं शान्तिरस्तु हयेषु च।।
स्वाहेति तत्र मन्त्रेण प्रापयेत्प्रथमाहुतिम्।
ततः प्रजापतीन्द्राय सोमाय वरुणाय च।।
विवस्वते कुवेराय सुषेणायाहिशायिने।
आदित्येभ्यस्तथा शिवभ्यां रुद्रेभ्यो वसुभिस्सह।।
विष्णोश्च विश्वेदेवानां साध्यानां मारुतैस्सह।
स्वाहाकारेण जुहुयात् प्रथमं हव्यवाहनम्।।
विद्याधर यक्ष गन्धर्वनक्षत्रोडुगणानां च ग्रहाणामसुरस्य च।
वासुकि प्रमुखानाञ्च नागानाङ्गरुडस्य च।।
सर्वासां पौर्णमासीनां देवीनां नदीनां सागराणां वनस्पतीनाम्।
स्वाहाकारेण जुहुयाद्वितीयञ्च हुताशनम्।।
देवानामेवमन्येषां स्वाहाकारेण होमयेत्।
दुर्बलानीह रक्षांसि प्रत्यूषे ब्रह्मतेजसा।।
भवन्ति तस्मात्प्रत्यूषे स्नापयेत् पोषयेद्धयान्।

पुरोहितस्तु द्विःकालं तर्पयित्वा द्विजोत्तमान् ।।
पुण्याहं कारयेन्नित्यं स्वस्त्याशीर्म्मङ्गलान्वितम् ।
नटनर्त्तकगन्धर्वाः सूतचारणमागधाः ।।
तुरगानुपतिष्ठेयुः सप्ताहं शान्तिकारणात् ।
मनोज्ञान्मधुराञ्छब्दाञ्छ्रुत्वा गच्छन्ति वै ग्रहाः ।।
वादित्रं वाहनागारे तस्मान्नित्यं प्रयोजयेत् ।
अतिक्रम्य च सप्ताहमष्टम्यां स्नापयेद्धयान् ।।
वरुणाय बलिन्दत्वा पश्चात् तोयेऽवगाहयेत् ।

''अष्टम्यां'' द्वितीयामारभ्याष्टमतिथौ ।

विभूषयेच्च मालाभिस्ततश्चैवाधिवासयेत् ।।
ततः शुक्लनवम्यां च निष्क्रम्य नगराद्बहिः ।
दिशि पूर्वोत्तरायाञ्च देशे प्राक् प्रवणे शुचौ ।।

''शुक्लनवम्यां'' व्यतीतायामिति शेषः द्वितीयाप्रभृति सप्तरात्रं रक्षण विधिमष्टदिनेऽधिवासनं चाभिधाय शुक्लनवम्यां नीराजनविधानादर्थोपि तथैवावगम्यते। व्यवहारोपि नीराजनस्य दशम्यामेव।

तथा च भोजराजः।

उत्सर्वाविधिञ्च विततं बलिञ्च नीराजनञ्च वलवृद्धयै ।
आश्वयुजेऽष्टम्यादिषु कुर्वीत यथाक्रम नृपतिः ।।
तत्र तोरणमुत्थाप्यं दशहस्तसकुच्छ्रितम् ।
विस्तारेष्टौसमाख्यातन्ध्वजमालाविभूषितम् ।।
सुरक्षितञ्चायुधीयैः प्राङ्मुखन्तु मनोरमम् ।
शुद्धस्नातास्ततो वाहाः सान्नाहिकपुरस्सराः ।।

सन्नाहाय प्रभवन्ति ''सान्निहिकाः''।

पुण्याहब्रह्मघोषैश्च गीतवादित्रनिस्स्वनैः ।
सूतमागधगन्धर्वैस्तूयमानास्त्वलङ्कृताः ।।

''गन्धर्वाः'' गायनाः।

शस्त्रहस्तैश्च पुरुषैस्तथैवाश्वोपजीविभिः ।

नेतव्या रक्ष्यमाणाश्च तत्र तोरणसन्निधौ।।
दक्षिणस्तम्भनिकटे हुत्वा चाग्निम्पुरोहितः।
दिशाम्बलिन्ततो दत्त्वा स्वस्ति राज्ञे निवेदयेत्।।
उल्काभीरुणिरक्षांसि नैव हिंसन्ति वाहनम्।
उल्काः प्रज्वालयेत्तस्माद्दक्षिणोत्तरपार्श्वयोः।।
अष्टौ मनुष्या अव्यङ्गा उल्काहस्ता द्विधा स्थिताः।
ते चाग्निव्यतिहारेण कुर्युरुल्काप्रदीपनम्।।

''अग्निव्यतिहारेण'' अन्योन्यस्थितोल्काप्रज्वालनेन।

हविःशेषेण राजाश्वं प्रोक्षयित्वा तु तर्पयेत्।

''हविःशेषेण'' चरुशेषेण। पिण्डन्दद्याच्च वाजिन इति शास्त्रान्तरे दर्शनात्।

अश्वराजपुरोधाश्च विष्णुस्ते पुरतःस्थितः।।
वरुणःपाशहस्तस्त्वाम्पृष्ठतः परिरक्षतु।
वैवस्वतकुवेरौ च पार्श्वयोरभिरक्षताम्।।
चन्द्रादित्यौ पृष्ठवंशमुदरम्पृथिवीधराः।
रक्षन्तु वक्त्रं गन्धर्वाबलमिन्द्रो ददातु ते।।
हविःशेषमिमम्प्राप्य विजयार्थम्महीपतेः।
ततस्तम्प्राशितञ्चापि पूजयेद्भिषजांवरः।।
कर्णजापमिमं चास्य दक्षिणे श्रवणे न्यसेत्।
कुलाभिजनजात्या च लक्षणैर्व्यञ्जनैःस्थितः।।
भर्त्तारमभिरक्ष त्वं शिवन्तव भवेदिति।
अङ्कदण्डमनिष्टानि क्षमस्वतुरगोत्तम।।
एवञ्च मन्त्रितो बाजी ब्रह्मघोषनिनादितः।
सिच्यमानः कुशोत्सृष्टैर्वारिभिर्म्मन्त्रसंस्कृतैः।।
ततस्तोरणमध्येन मन्त्रिभिः सह पार्थिवः।
निर्गच्छेत्तु जयेत्युक्त्वा शेषैरनुगतो हयैः।।
एवन्नीराजितैरश्वैस्ततो लौहाभिहारिकम्।

कुर्य्यादाश्वयुजङ्कर्म्म सर्वमेतद्विशेषतः।।

इति स्वातिसाम्पातिकोनामाश्वनीराजनविधिः।

।। अथ ज्योतिःशास्त्रे स्वातीसम्पातशान्तिः।।

स्वाती नाम रवेः पत्नी वडवारूपिणी रथम्।
वहन्ती साऽश्विनेमासिसूर्य्यरश्मिसमाश्रिता।।
सप्ताहं पीडयेद्वाहांस्ततः स्नातार्चितान्गृहे।
रेवन्तम्पूजयित्वाऽथ वध्वा पोट्टलिकाङ्गले।।
मुराऽयोऽरिष्टहिङ्गूग्रापञ्चरत्नाज्यसर्षपैः।
धूपो निम्वाज्यसिद्धार्थभूतकेशीसुरादिभिः।।
द्वितीयादि नवम्यन्तं शुक्लपक्षेऽर्कतेजसः।
सप्ताहं तान् पटैस्तस्मात्कटैरावृत्य रक्षयेत्।।
वातायोद्घाटनं रात्रौ कारयेल्लुण्ठनादिकम्।
माषकुल्माषमांसाद्यैर्द्देयो दिक्षु बलिर्न्निशि।।

ॐ लोकपालग्रहनक्षत्रसुरासुरनागगन्धर्वयक्षराक्षसविद्याधरगरुड-महोरगगजदेवताभूतपिशाचक्रव्यादमनुष्यामनुष्येभ्योऽयमाहारमिममादाय समन्तादुपशाम्यन्तु स्वमालयङ्गच्छन्तु स्वाहा।।

शान्तिहोमौ च सततं स्थाप्याश्च वृषधेनुकाः।

"मुरा' भटउर इति यत्प्रसिद्धिः। "अयो" लौहम् "अरिष्टं" हरिठ इति प्रसिद्धम्। "उग्रा" वचा।

अथाश्विनाधिकारे ज्योतिःशास्त्रे

शुक्लपक्षे द्वितीयायां शालां सम्वेष्ट्य रक्षयेत्।
आदित्यरश्मितो वाहान्कटैर्वस्त्रादिकैस्तथा।।
अस्तङ्गते दिनकरे कटादीनपकर्षयेत्।
प्रवातार्थम्पुनर्द्दद्याद्यावत्सन्ध्या न जायते।।

शालाप्रवेशविहितां रक्षां कण्ठे प्रदापयेत्।
रक्षान्तु लौहकन्निम्बपत्राणि गुग्गुलं सर्षपान्घृतम्।।
चेले वद्धां वचां हिङ्गुं बध्नीयाद्वाजिनांगुले।
घर्षणंभ्रामणञ्चैव तथा चैवोपवर्त्तनम्।।
निशाशेषे प्रकर्त्तव्यं यावद्दूरे दिवाकरः।
एतत्प्रतिदिनं कुर्य्यात्सप्तरात्रमतन्द्रितः।।
कारयेद्ब्राह्मणश्चैव शान्तिस्वस्त्ययनानि च।
सप्तरात्रे व्यतिक्रान्ते क्षौरितां स्नापितान्स्तथा।।
अर्च्चितान्कुसुमैर्गन्धैस्ततो नीराजयेद्बुधः।
ततो वादित्रनिर्घोषैर्न्नेतव्या ग्रामतो वहिः।।
दिशम्पूर्वामथोदीचीमश्वा विप्रैरधिष्ठिताः।
वह्नौ हुत्वा द्विजो मन्त्रैर्वेदोद्दिष्टैर्यथाक्रमम्।।
अर्घशान्तिन्तुरङ्गाणान्ततो हृष्टः प्रदापयेत्।
प्रदक्षिणन्ततो वह्नेः कारयित्वा द्विजोत्तमैः।।
पुनरश्वाः प्रवेष्टव्यास्तोरणान्तरनिर्गताः।
अग्रमाल्याग्रगन्धैश्च भोजनाग्रैस्तथैव च।।
गृहागतेषु वाहेषु अर्घन्दद्यान्नराधिपः।
ततस्तेनैव विधिना शरावान् पूर्य्य शालिभिः।।
नानाखाद्यनिवेद्यानि रेवन्ताय प्रदापयेत्।
अर्च्चितेषु ततो वैद्यःकर्णजापमिमंवदेत्।।
कीर्त्तितम्मुनिभिः पूर्वं वाजिशास्त्रार्थवेदिभिः।
पूर्वदेवमयस्त्वं हि स्मरजातिं हयोत्तम।।
सर्वं यत्नात् त्वया रक्ष्यं मम भर्त्तुः सुखावहम्।
कर्णे जापम्भिषरदत्वा यथास्थानं ततो हयान्।।
स्थापयेत्कृतमङ्गल्यान् हृष्टान्कल्मषवर्ज्जितान्।

नार्च्चयेज्जलजैः पुष्पैर्वाहानर्घविधिम्प्रति।।
सौगन्धिकं विशेषेण तेषां दद्यान्न सर्वदा।
ग्रहमोहस्तु कर्त्तव्यो ग्रहाणामर्चनं तथा।।
अनेन विधिना यस्तु करोति तुरगोत्सवम्।
तस्य तुरङ्गनाथस्य भयं विद्यते क्वचित्।।
पूर्वाभिमुखः श्रीमान् वैयाघ्रे चर्म्मणि स्थितो राजा।
तिष्ठेदनलसमीपे तुरगभिषग्दैववित्सहितः।।
पिण्डमभिमन्त्र्य दद्यात्पुरोहितो वाजिने स यदि जिघ्रेत्।
अश्नीयाद्वा जयकृद्विपरीतस्त्वन्यथाभिहितः।।
यद्यानीतस्तिष्ठेद्दक्षिणचरणं हयः समुत्क्षिप्य।
स जयति तदा नरेन्द्रः शत्रूनचिराद्विना यत्नात्।।
आरोहति क्षितिपतौ विनयोपपन्नो
यात्रानुगोऽन्यतुरगंप्रतिह्रेषितश्च।।
वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं
योऽश्वः स भर्त्तुरचिरात् प्रचिनोति लक्ष्मीम्।।

।। अथ यात्रा।।

तत्र वराहः

खलिनं हयाय दद्यादभिमन्त्र्य पुरोहितस्ततो राजा।
आरभ्योदक् पूर्वांयायान्नीराजितः सबलः।।
मृदङ्गशंखध्वनिहृष्टकुंजरस्रवन्मदामोदसुगन्धिमारुतः
शिरोमणिव्रातबलत्प्रभाभरैर्ज्ज्वलद्विवस्वानिवतोयदात्यये
हंसपंक्तिभिरितस्ततोऽद्रिराट्संपतद्भिरिव शुक्लचामरैः
मृष्टगन्धपवनानुवाहिभिर्द्धूयमानरुचिरस्रगम्बरः।।

सबज्रमुक्ताफलभूषणोज्ज्वलः सितस्रगुष्णीषविलेपनाम्बरः।
सितातपत्रोगजपृष्ठमाश्रितो घनोपरीवेन्दुतलेभृगोस्सुतः।।
उत्पतद्भिरिव खं तुरङ्गमैर्द्दारयद्भिरिव दन्तिभिर्धराम्।
निर्ज्जितारिभिरिवामरैर्न्नरैश्शक्रवत्परिवृतो व्रजेन्नृपः।।
सम्प्रहृष्टनरबाजिकुञ्जरं निर्म्मलग्रहगणंसुभासुरम्।
निर्विकारमरिपक्षभीषणं यस्य सैन्यमचिरात्स गाञ्जयेत्।।

इति श्रीदुर्गाभक्तितरङ्गिण्याम्प्रमाणतरङ्गः प्रथमः।

◆◆

।। श्रीः ।।

अथागमपुराणादिप्रमाणपरिनिष्ठितः।
दुर्गोत्सवविधानस्य प्रयोगो लिख्यतेऽधुना।।

आश्विनशुक्लप्रतिपदि स्नातश्शुचिः शुक्लद्विवासाः सुप्रक्षालित पाणिपादो दर्भपाणिराचान्तो दारुमयशुद्धासने प्राङ्मुखोपविष्टो यजमानः स्वयमन्यब्राह्मणद्वारा वा पूर्वाह्णे शुभे लग्ने शोभनमुहूर्त्ते दैवज्ञनिवेदिते देवीपूजायोग्यशुभदारुमयरमणीयगृहे चतुरस्रचतुर्हस्त दर्प्पणोदरनिभवेदिकान्विते पञ्चवर्णरजोभिः पद्माकारं मण्डलमालिख्य तन्मध्ये नवं दृढमव्रणमश्याममूलं वहिर्दध्यक्षतविभूषितमन्तःक्षिप्तपञ्चरत्नं निर्म्मलजलपूर्णं वस्त्रयुगवेष्टितग्रीवम् माल्यालङ्कृतञ्चूताश्वत्थन्यग्रोधोदुम्बरप्लक्षपञ्चपल्लवमुखं मुखदत्तयवशरावं यवानामुपरि ब्रह्मभवानीबरुणाग्निगणपतिमहोरगदिक्पालनवग्रहान् प्रत्यहं पूजयेत्। "ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरुर्ज्जा-निवर्त्तस्वसानः सहस्रं धुक्ष्वोरुधारापयस्वती पुनर्म्माविशताद्रयिः" इति मन्त्रेण कलशं स्थापयेत्। "ॐ वरुणस्योत्तम्भ नमसि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्यऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद" इति मन्त्रेण वरुणम्।

"ॐ गंगाद्यास्सरितस्सर्वास्समुद्राश्च सरांसि च
सर्वे समुद्रास्सरितस्सरांसि च नदा ह्रदाः।
आयान्तु यजमानस्य दुरितक्षयकारकाः"।।

इति मन्त्रेण सर्वतीर्थानि कलशे न्यसेत्। ततोऽश्वस्थानगजस्थान-रथ्यावल्मीकनदीसङ्गमह्रदगोकुलाहृतास्सप्तमृत्तिकाः सर्वौषधीश्च

"मुरामांसीवचाकुष्ठं शैलेयं रजनीद्वयम्
शठीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः"।।

इति कथिताः, तीर्थजलं फलदूर्वाक्षतञ्च क्षिपेत्। वेदिकोणेषु वस्त्रमाल्यालङ्कृतान् जलपूर्णान् यवशरावमुखान् यवोपरि चतुरः कलशान्निवेशयेत्।

## ।। अथ कलशे ब्रह्मपूजा।।

सपुष्पाक्षतमादाय "ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इहतिष्ठ" इत्यावाह्य स्थापयित्वाऽर्घपात्रे जलपुष्पाक्षतादि निधाय "ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्च्चसीजायतामाराष्ट्रे राजन्यः शूर इषव्योतिव्याधीमहारथो जायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिःपुरन्धिर्य्योषा जिष्णूरथेष्ठास्सभेयो युवास्य यजमानस्य वीरोजायतान्निकामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्" इति मन्त्रेण पाद्यादि दत्वा इदमनुलेपनं ॐ ब्रह्मणे नमः। इति पुष्पाञ्जलित्रयेण पूजयित्वा। एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि ॐ ब्रह्मणे नमः। इदं वस्त्रं बृहस्पतिदैवतं ॐ ब्रह्मणे नमः। इति दद्यात्। ततः प्रदक्षिणीकृत्य नमस्कुर्य्यात्।

## ।। अथ प्रतिपदाादे प्रतिदिनं दुर्गापूजाविधिः।।

कालिकापुराणे

प्रतिपदमुपक्रम्य तावत्तु सप्तरात्राणि सर्वदैवैस्सुपूजिता। पूजाकुम्भेपि। तदुक्तं देवीपुराणे "पूज्यामण्डलकुम्भस्था" इति।

तत्र क्रमः

पुष्पाक्षतमादाय। ॐ भूर्भुवः स्वः भगवति दुर्गे इहागच्छ इह तिष्ठेत्यावाह्य स्थापयित्वा सौवर्णाद्यर्घपात्रे जलपुष्पाक्षतदधिदूर्वाकुशतिल-कुंकुमविल्वपत्राणि निधाय।

ॐ जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वधा स्वाहा नमोऽस्तु ते।।

इति देवी पुराणोक्तमन्त्रेण "ऊँदुर्गेदुर्गेरक्षिणिस्वाहा" इति जयदुर्गा मन्त्रेण वा एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ऊँ दुर्गायै नमः। इति चन्दनकुङ्कुमादिनानुलिप्य। ऊँ दुर्गायै नमः इति पुष्पाञ्जलि-त्रयेण पूजयित्वा ऊँ अमृतोद्भवमितिविल्वपत्राणि

ऊँ अमृतोद्भवं श्रीवृक्षं शङ्करस्यसदाप्रियम्।
विल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि।।

ऊँ ब्रह्मविष्ण्वितिद्रोण पुष्पाणि च दत्वा

ऊँ ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम्।
तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये।।

एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि ऊँ दुर्गायै नमः। इदं वस्त्रं वृहस्पतिदैवतं ऊँ दुर्गायै नमः। इति दद्यात्। ततः किञ्चित् स्तुत्वा प्रणम्य प्रार्थयेदनेन

ऊँ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि।
द्रव्यमारोग्यविजयं देहि देवि नमस्सदा।।
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते।।
रूपन्देहि यशो देहि भाग्यम्भगवति देहि मे।
पुत्रान्देहि धनन्देहि सर्वान्कामान्प्रदेहि मे।।

छागादिबलिं नानाविधकामनया देव्यै दद्यात्। देवीगृहे घृतपूरितान् तैलपूरितान् वाऽहोरात्रस्थायिनो दीपान् प्रज्वालयेत्। सति सम्भवे देवीमुद्दिश्य प्रतिपदि चन्दनकुकुमादिकेशसंस्कारादिकद्रव्यं, द्वितीयायां केशसंय्यमनार्थं पट्टडोलकं, तृतीयायां चरणरागार्थमालक्तकं शिरसि धारणार्थं सिन्दूरं मुखविलोकनार्थं दर्प्पणम्, चतुर्थ्याम् मधुपर्क्कं रजतादितिलकं नेत्रमण्डनाय कज्जलं, पञ्चम्यां चतुस्समानुलेपनमलङ्करणञ्चोपहरेत्। षष्ठ्यादिषु देवीबोधनादिविधिः पश्चादभिधास्यते।।

## ।। अथाश्वशालायामश्वप्रवेशनविधिः ।।

तत्राश्विनशुक्लद्वितीयायां स्वातीनक्षत्रयुक्तायां केवलायां वा अश्वशालां मनोरमामनुलिप्तां सर्वतः परिवृतां नानाकारपुष्पालङ्कृतां सुधूपितां विधाय तस्यां मुख्याश्वबन्धनस्थानात्पश्चिमदिशि वप्रत्रयावृतं स्थण्डिलमुपकल्प्य तदुपरि चन्दनादिना मण्डलद्वयङ्कृत्वा तत्र रेवन्तमुच्चैश्रवसञ्च पूजयेत् ।।

तत्र क्रमः

कुशतिलजलान्यादाय "ॐ अद्य सकलाश्वस्वात्युत्पात पीड़ाप्रशमन-नैरुज्यदीर्घायुष्ट्वसमृद्धिकामो रेवन्तमुच्चैश्श्रवसं तुरङ्गांश्चाहम्पूजयिष्ये" इति संकल्प्य। सपुष्पाक्षतमादाय। ॐ भूर्भुवः स्वः भगवन् रेमन्त इहागच्छ इह तिष्ठेत्यावाह्य स्थापयित्वा अर्घपात्रे जलपुष्पादि निधाय। एतानि पाद्यार्घाचमनीय स्नानीयमधुपर्कपुनराचमनीयानि ॐ रेवन्ताय नमः इति पाद्यादि दत्वा। इदमनुलेपनम् ॐ रेवन्ताय नमः इत्यनुलिप्य।

ॐ नमो देवाधिदेवाय तुरङ्गवलचारिणे।<br>
सूर्य्यपुत्राय देवाय तुरङ्गाणां हिताय च।<br>
तुरङ्गपरिषद्यस्य नृगजोपरि धावति।<br>
साश्वमश्वाधिपं रक्ष शरणं त्वां व्रजाम्यहम् ।।

इति पठित्वा। ॐ रेवन्ताय नमः इति पुष्पाञ्जलित्रयेण पूजयेत्। एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि ॐ रेवन्ताय नमः।। इदं वस्त्रं बृहस्पतिदैवतं रेवन्ताय नमः इत्युत्सृजेत्।

ॐ सूर्य्यपुत्र महावाहो छायाहृदयनन्दन।<br>
शान्तिङ्कुरु तुरङ्गाणां रेवन्ताय नमोऽस्तुते ।।

इति पठित्वा। प्रणम्य छागादिबलिन्दद्यात्। ततः पुष्पाक्षतमादाय "ॐभूर्भुवः स्वः उच्चैश्श्रव इहागच्छ इह तिष्ठेत्यावाह्य स्थापयित्वाऽर्घपात्रे पुष्पादि निधाय। एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ उच्चैश्श्रवसे नमः। एतानिगन्धपुष्पधूपदीपताम्बूलनैवेद्यानि ॐ उच्चैश्श्रवसे

नमः। इदं वस्त्रं बृहस्पतिदैवतं ऊँ उच्चैश्श्रवसे नमः। इति पूजयेत् प्रणमेच्च। ततः स्नातालङ्कृतान्मुख्याश्वान् सन्निध्याप्य एषोर्घः ऊँ तुरङ्गेभ्यो नमः। इदमनुलेपनं ऊँ तुरङ्गेभ्यो नमः इति पुष्पनैवेद्यादिभिः पूजयेत्। तुरङ्गपूजायां जलपुष्पाणि विवर्ज्जयेत्। एवं नवमीपर्य्यन्तं प्रत्यहं पूजां विदध्यात्। शान्तिस्वस्त्यने तुरङ्गानुद्दिश्य कारयेत्। धान्याकभल्लातक-कूटवचासितसर्षपान् पञ्जरङ्गसूत्रेण वस्त्रे रक्षापोटलिकां बध्वा अश्वानाङ्कण्ठे बन्धयेत्। शस्त्रपाणिपुरूषैस्तेषां रक्षाङ्कारयेत्। ताडनवाहनादि विवर्जयेत्। तुरङ्गशालायां गीतमधुरवाद्यादि कारयेत्। निम्बाज्यसर्षपधूपं दापयेत्। धेनुवृषाजमेषान् स्थापयेत् रविकिरणसञ्चारं वारयेत्। वायव्यादिवैदिकमन्त्रैः शान्तिहोमञ्च कारयेत्। इत्यश्वशाला-प्रवेशनविधिः।

## ।। अथ विल्वे देवीबोधनामन्त्रणविधिः।।

तत्राश्विनशुक्लषष्ठ्यां ज्येष्ठानक्षत्रयुक्तायां केवलायां वा सायंकाले विल्वतरुसन्निधानं गत्वाऽर्घपात्रे जलपुष्पाक्षतादि कृत्वा एषोऽर्घः ऊँ विल्ववृक्षाय नमः इत्यर्घम्, इदमनुलेपनं ओं विल्ववृक्षाय नम इति पुष्पाञ्जलित्रयं दत्वा धूपदीपनैवेद्यवासांसि दद्यात्। ततः पुष्पाक्षतमादाय ओं भूर्भुवः स्वर्भगवति दुर्गे इहागच्छ इह तिष्ठ इत्यावाह्य देवीं विल्ववृक्षे स्थापयित्वा अर्घपात्रे जलपुष्पाक्षतादि कृत्वा ओं जयन्तीत्यादिमन्त्रमुच्चार्य्य ओं दुर्गायै नम इति पाद्यादिभिरुपचारैः पूजयेत्। ततो गीतवाद्यमङ्गल-घोषपुरस्सरं देवीं विल्वे विबोधयेदनेन।

ऊँ ऐं रावणस्य वधार्थाय रामस्यानुग्रहाय च।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतःपुरा।

अहमप्याश्विनेषष्ठ्यां सायाह्ने बोधयाम्यतः" इति देवीं बोधयित्वा। विल्वतरुमामन्त्रयेदनेन।

ॐ मेरुमन्दरकैलासहिमवच्छिखरे गिरौ।
जातः श्रीफलवृक्ष त्वमम्बिकायास्सदाप्रिय।।
श्रीशैलशिखरे जात श्रीफल श्रीनिकेतन।
नेतव्योऽसिमयावृक्ष पूज्यो दुर्गास्वरूपतः"।

इति विल्वाभिमन्त्रणविधिः।

## ।। अथ पत्रिकाप्रवेशनविधिः।।

तत्राश्विनशुक्लसप्तम्यां मूलनक्षत्रयुक्तायां केवलायां वा पूर्वदिनामन्त्रितविल्वतरुसन्निधानं गत्वा तमभ्यर्च्च्य कृताञ्जलिः प्रसादयेदनेन

ॐ विल्ववृक्षमहाभाग सर्वदा शङ्करप्रिय।
गृहीत्वा तव शाखान्तु दुर्गापूजाङ्करोम्यहम्।।
शाखाछेदोद्भवं दुःस्वप्न च कार्य्यन्त्वया प्रभो।

इति प्रसाद्य शाखामेकां छेदयेत्। छेदनमन्त्रो गौडनिवन्धे। "ॐ छिन्धि फट् ओं हूँ फट् स्वाहा" ततः फलद्वययुतां विल्वशाखामानीय गृहप्राङ्गणे पीठोपरि स्थापयित्वा स्नापयेत्। एषोऽर्घः ओं विल्वशाखायै नम इत्यर्घानुलेपनपुष्पधूपदीपनैवेद्यवासोभिः पूजयेत्। विल्वशाखायां मृण्मयप्रतिमायाञ्च देवीमावाह्य स्थापयित्वा पाद्यादिभिरुपचारैः पूजयेत्। छागादिबलिञ्च दद्यात्। अथ दोलायां विल्वशाखां मृण्मयप्रतिमाञ्च पूजागृहद्वारदेशमानीय तत्र गोमयेनकृतमण्डले भूतानि सम्पूज्याऽपसारयेत्।

तत्रविधिः। सपुष्पाक्षतमादाय ॐ भूतानि इहागच्छत इह तिष्ठतेत्यावाह्य स्थापयित्वा ॐ भूतेभ्यो नम इति पाद्यादिभिस्सम्पूज्य माषभक्तबलिं दद्यादनेन

ॐ भूताः प्रेताः पिशाचाश्च ये च सन्त्यत्र भूतले।
ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः।।
पूजिता गन्धपुष्पाद्यैबलिभिस्तर्प्पितास्तथा।

देशादस्माद् विनिस्सृत्य पूजां पश्यन्तु मत्कृताम्।।

ओंभूतेभ्यएषमाषभक्तबलिर्न्नम" इति सपुष्पं जलमादायोत्सृजेत्।

ओं अपसर्प्पन्तु ते भूता ये भूता भूमिपालकाः।
भूतानामविरोधेन पूजाकर्म्म करोम्यहम्।।

फडित्यनेन भूतान्यपसारयेत्। ओं फडिति सप्तवाराभिमन्त्रितान् सितसर्षपयवादीन् सर्वविघ्नोपशान्तये पूजागृहे विकिरेत्।

कालिकापुराणे

स्थितेषु सर्वभूतेषु नैवेद्यं मण्डलन्तथा
विलुपन्ति सदा लुब्धा न च गृह्णन्ति देवताः।
तस्माद्यत्नेन कर्त्तव्यं भूतानामपसारणम्
अस्त्रमन्त्रेण सहितस्तस्य मन्त्र उदाहृतः।।

शारदातिलके

विकिरेत्तत्र सप्तजप्तान् शरालुना।

'शरालुना' अस्त्रमन्त्रेण।

लाजचन्दनसिद्धार्थफलपुष्पकुशाक्षताः।
विकिरा इति संदिष्टास्सर्वविघ्नविनाशनाः।।

'अक्षता' यवाः। अथ पुनर्विल्वशाखायां आंचामुण्डायै नम इति पाद्यादिभिश्चामुण्डां सम्पूज्य

श्रीशैलशिखरे जातश्रीफल श्रीनिकेतन।
नेतव्योऽसि मयाऽऽगच्छ पूज्योदुर्गास्वरूपतः।।

इति चामुण्डासरूपतयाध्यात्वाविल्वशाखाङ्गृहीत्वा "ओंचामुण्डे चल चल" इति चालयित्वा मृण्मयप्रतिमासहिताङ्गीतवाद्यादिना गृहम्प्रवेश्य।

ओं आरोपितासि दुर्गे त्वं मृण्मये श्रीफलेपि च।
स्थिरा नितान्तं भूत्वा मे गृहे त्वङ्कामदा भव।।

ओं स्थिरी भव" इति पूजास्थाने पीठोपरि स्थिरीकृत्य तत्समीपे समाचारादपराजितालतावद्धारम्भादिनवपत्रिकाः स्थापयेदर्च्चयेच्च।

तत्र क्रमः।

अक्षतमादाय। "ओंमनोजूतिर्ज्जषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टम्। यज्ञ समिमं दधातु विश्वेदेवा स इह मादयन्तामोम्प्रतिष्ठ ओं भगवतिदुर्गे इह प्रतिष्ठिता भव" इति प्रतिष्ठाप्य ध्यात्वा सपुष्पाक्षतमादाय

ओंआवाहयाम्यहं देवींमृण्मये श्रीफले तथा।
कैलासशिखराद्देवी विन्ध्याद्रेर्हिमपर्वतात्
आगत्य विल्वशाखायां चण्डिके कुरु सन्निधिम्।

ओंभगवति दुर्गे इहागच्छ" इत्यावाह्य

स्थापितासि मया देवी श्रीफले मृण्मये ऽपि च।
आयुरारोग्यमैश्वर्यं देहि देवि नमो ऽस्तुते।।

"ओं भगवतिदुर्गे इह तिष्ठ" इति स्थापयित्वा कृतांञ्जलिः पठेत्

ओंदुर्गेदुर्गस्वरूपासि सुरतेजोमहाबले।
सदानन्दकरे देवि प्रसीद मम सिद्धये।।
एह्येहि भगवत्यम्बशत्रुक्षयजयप्रदे।
भक्तितः पूजयामित्वां दुर्गेदेवि सुरार्च्चिते।।
पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः।
पल्लवेसंस्थिते देवि पूजये त्वां प्रसीदमे।।
दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय।
यज्ञभागानूगृहाणत्वं योगिनीकोटिभिः सह।।

ततः सौवर्णाद्यर्घपात्रे जलपुष्पाक्षतकुंकुमदधिदूर्वाकुशतिलबिल्वपत्राणि विधाय

ॐ जयन्ती मङ्गलाकाली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवाधात्री स्वधा स्वाहा नमो ऽस्तुते।।

इति मन्त्रम् "ॐ दुर्गे दुर्गे रक्षिणि स्वाहा" इति वा मन्त्रमुच्चार्य्य एतानि पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि "ॐ दुर्गायै नमः"।

इदमनुलेपनं ''ॐ दुर्गायै नमः''। ''ॐ दुर्गायै नम'' इति पुष्पाञ्जलि-त्रयेण पूजयेत्।

ओं अमृतोद्भवं श्रीवृक्षं शङ्करस्य सदाप्रियम्।
विल्वपत्रं प्रयच्छामि पवित्रन्ते सुरेश्वरि।।

''ओं दुर्गायै नम'' इति विल्वपत्रं निवेदयेत्।

ओं ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम्।
तत्तेदुर्ग्गे प्रयच्छामि सर्वकामार्थसिद्धये।

''ओं दुर्ग्गायै नम'' इति द्रोणपुष्पन्निवेदयेत् जातीचम्पकमल्लिकादि-सुगन्धिकुसुमैरपि यथासम्भवं पूजयेत्। मूलमुच्चार्य एतानि गन्धपुष्पधूप-दीपताम्बूलनैवेद्यानि ''ओं दुर्ग्गायै नमः''। इदं वस्त्रं वृहस्पतिदैवतं ''ओं दुर्ग्गायै नमः'' इति दद्यात्। ततः स्तुत्वा प्रणम्य बद्धाञ्जलिः प्रार्थयेत्।

ओं महिषघ्नि महामाये चामुण्डे मुण्डमालिनि
द्रव्यमारोग्यमैश्वर्य्यन्देहि देवि नमोऽस्तुते।
ओं कुङ्कुमेन समालब्धे चन्दनेन विलेपिते
विल्वपत्रकृतापीडे दुर्ग्गेऽहं शरणाङ्गतः।।
ओं सर्वमङ्गलमङ्गल्ये शिवेसर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते।।
ओं रूपन्देहि यशोदेहि भाग्ये भगवति देहि मे।
पुत्रान्देहि धनन्देहि सर्वान्कामान्प्रदेहि मे।।

इति पठित्वा नमस्कुर्य्यात् शेषे।

कदली दाडिमी धान्यं हरिद्रा मानकङ्कचुः।
विल्वोऽशोको जयन्ती च विज्ञेया नव पत्रिकाः।।

तत्र कदल्यां ब्रह्माणीं दाडिमे रक्तचण्डिकां धान्यं लक्ष्मीं हरिद्रायां दुर्ग्गां मानके चामुण्डां कचुपत्रिकायां कालिकां बिल्वे शिवां अशोके शोकरहितां जयन्त्यां कार्त्तिकीं प्रत्येकमावाह्य स्थापयित्वा पञ्चोपचारैः

पूजयेत् छागमेषमहिषादि बलिन्दद्यात्। सर्व्वायुधानि वाद्यानि ध्वजादि चिह्नानि देवीगृहे यथासन्निवेशं स्थापयेत् तोरणस्तम्भे पताकादि देवीगृहे द्वारेषु यथा शोभं समुच्छ्रयेत्।। इति पत्रिकाप्रवेशनविधिः।।

## ।। अथ महाऽष्टम्यां देवीपूजाविधिः।।

तत्र कर्त्ता स्नातः सुप्रक्षालितपाणिपादः आचान्तः शुद्धासने प्राङ्मुख उपविश्य कुशत्रयतिलजलान्यादाय सङ्कल्पं विधाय स्मरणादिकमाचरेत्।

दुर्ग्गास्मरणस्य

तत्र शिवरहस्ये

गायन्ति ये गिरिसुताञ्च विलोकयन्ति
ध्यायन्ति वाऽमलधियश्च शिवां स्मरन्ति।
गौरीमुमां भगवतीञ्जगदेकदेवीं
तेऽपि प्रयान्ति परमं पदमिन्दुमौलेः।।

ॐ अस्यां रात्रौ महाऽऽष्टम्यां इन्दुमौलिपरमपदप्राप्तिकामो भगवत्या दुर्ग्गादेव्याः स्मरणमहङ्करिष्ये।

तत्रैव स्मरणस्य

ये तां स्मरन्ति निगडैरपि बद्धपादा
व्याघ्राहिचौरनृपवह्निभयेषु दुर्ग्गाम्।
तेषान्नकिञ्चिदपि दस्युभयं नृणां स्याद्-
वद्धास्तु मुक्तिमुपलभ्य सुखं रमन्ते।।

ॐ अद्य सर्व्वभयाभावकामो भगवत्या दुर्ग्गादेव्याः स्मरणमहङ्करिष्ये।

मार्कण्डेयपुराणे स्वस्थस्मरणस्य

दुर्ग्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभान्ददासि।

ॐ अद्यातिशयितशुभमतिप्राप्तिकामो भगवत्या दुर्ग्गा देव्याः स्मरणमहङ्करिष्ये।

शिवरहस्ये **स्मरणस्य**

ये मनागपि शर्व्वाणीं स्मरन्ति शरणैषिणः।
दुष्पारापार संसारसागरे न पतन्ति ते।।

ॐ अद्य दुष्पारसंसारसागर पतनाऽभावकामो भगवत्या दुर्गादेव्याः स्मरणमहङ्करिष्ये।

भविष्यपुराणे **सततस्मरणस्य**

स्वपंस्तिष्ठन् व्रजन्वापि विलपन् भोजने रतः।
स्मरते सततं दुर्ग्गां स च मुच्येत बन्धनात्।

ॐ अद्यवन्धविमुक्तिकामो दुर्गादेव्याः सततस्मरणमहङ्करिष्ये।।

**अथ कीर्त्तनस्य** शिवरहस्ये

शमायाऽलं जलं वह्नेस्तमसो भास्करोदयः।
शान्त्यै कलेरघौघस्य देवीनामानुकीर्त्तनम्।।

ॐ अद्यकलिकल्मषौघप्रशमनकामो दुर्ग्गादेव्या नामानुकीर्त्तन-महङ्करिष्ये।

भविष्ये **नामकीर्त्तनस्य**

दुर्ग्गानामानि संकीर्त्य तस्या लोके महीयते।

ओं अद्य दुर्ग्गालोकमहितत्वकामो दुर्गादेवीनामानुकीर्त्तनमहङ्करिष्ये।

शिवरहस्ये **नामोच्चारणस्य**

नामोच्चारणमात्रेण यस्याः क्षीणाघसञ्चयः।
भवत्यवाप्तकल्याणः कस्तान्नाऽराधयोच्छिवाम्।।

ओं अद्याघसञ्चयक्षयकल्याणावाप्तिकामो दुर्ग्गानामोच्चारण-महङ्करिष्ये।

**अथ दर्शनस्य** भविष्ये

सर्व्वावस्थाङ्गतो वाऽपि युक्तो वा सर्व्वपातकैः।
दुर्ग्गां दृष्ट्वा नरस्सोऽपि प्रयाति परमम्पदम्।।

ओं अद्य परमपदप्राप्तिकामो दुग्गदिव्या दर्शनमहङ्करिष्ये।

तत्रैव दर्शनस्य

दुर्ग्गाया दर्शनं पुण्यं दर्शनादपि वन्दनम्।
वन्दनात्स्पर्शनं श्रेष्ठं स्पर्शनादपि पूजनम्।।

ऊँ अद्य पुण्यप्राप्तिकामो दुग्गदिव्या दर्शनमहङ्करिष्ये।।

**अथाभिवन्दनस्य**

ओं अद्यदुर्ग्गादर्शनजन्य पुण्याधिकप्राप्तिकामो दुग्गदिव्या अभिवन्दन-महङ्करिष्ये।

**अथ स्पर्शनस्य**

ऊँ अद्य दुर्ग्गाभिवन्दनजन्यपुण्याधिकपुण्यप्राप्तिकामो दुग्गदिव्याः स्पर्शनमहङ्करिष्ये।

यमस्मृतौ माल्यापनयनस्य

देवमाल्यापनयनं देवागारसभूहनम्।
लपनं सर्वदेवानांगोप्रदानफलस्मृतम्।
देवपदं देवीनामप्युपलक्षणं प्रक्रान्तत्वात्।।

ऊँ अद्य गोदानजन्यपुण्यसमपुण्यप्राप्तिकामो दुग्गदिव्या माल्यापन-नयनमहङ्करिष्ये। दुर्ग्गागृहे मार्ज्जनेऽप्येतदेव फलम्।।

## ।। अथ महाष्टम्यां देवीपूजनस्य (फलम्)।।

भविष्यपुराणे

न तत्र देशे दुर्भिक्षं न च दुःखं प्रवर्त्तते।
नाकाले म्रियते कश्चित् पूज्यते यत्र चण्डिका।।

जितेन्द्रियो ब्रह्मचारी शुचिर्भूत्वा तु यो नरः।
चण्डिकां पूजयेद्भक्त्या स याति परमं परम्।।
सर्वकालेषु सर्वेषु चण्डिकां यः प्रपूजयेत्।
विमानवरमारुह्य ध्वजमालाकुलं नृप।।
ब्रह्मलोकन्नरो गत्वा मोदते शाश्वती समाः"।।

भविष्योत्तरे

अष्टम्याञ्च नवम्याञ्च जगन्मातरमम्बिकाम्।
पूजयित्वाऽऽश्विने मासि विशोको जयति द्विषः।।

निरपेक्षश्रुतेरपि वृद्धाः समुच्चयमाहुः, किन्तु विकल्पो युक्तः। समुच्चयपक्षे वाक्यम्। ऊँ अद्य महाष्टम्यान्दुर्भिक्षदुःखनिवृत्ति सुभिक्षदीर्घायुष्ट्वपरमपदप्राप्तिध्वजमालाकुलविमानवरारोहणपूर्वक ब्रह्मलोक-गमनपूर्वक शाश्वतसमावच्छिन्नहर्षविजयकामः सोपवासो दुर्गादेव्याः पूजा-महङ्करिष्ये। इति सङ्कल्प्य, जयन्तीत्यादि मूलमन्त्रेण प्राणायामत्रयं विधाय मत्स्यपुराणोक्तलक्षणां दुर्गादेवीन्ध्यायेत्।।

तद्यथा

जटाजूटसमायुक्तामर्द्धेन्दुकृतलक्षणाम्।
लोचनत्रयसंयुक्तां पद्मन्दुसदृशाननाम्।।
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम्।
नवयौवनसम्पन्नां सर्वाभरणभूषिताम्।।
सुचारुवदनान्तद्वत्पीनोन्नतपयोधराम्।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम्।।
त्रिशूलं दक्षिणे दद्यात् खड्गं चक्रं क्रमादधः।
तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि निबोधत।।
खेटकं पूर्णचापञ्च पाशमङ्कुशमूर्द्धतः।
घण्टां वा परशुं वाऽपि वामतस्सन्निवेशयेत्।।
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत्।

शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम्।।
हृदि शूलेन निर्भिन्नं निर्य्यदस्त्रविभूषितम्।
रक्तरक्तीकृताङ्गञ्च रक्तविस्फारितेक्षणम्।।
वेष्टितन्नागपाशेन भ्रुकुटीभीषणाननाम्।
सपाशवामहस्तेन धृतकेशञ्च दुर्गया।।
वमद्रुधिरवक्तृञ्च देव्याः सिंहं प्रदर्शयेत्।
देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम्।।
किञ्चिदूर्द्ध्वन्तथावाममङ्गुष्ठं महिषोपरि।
स्तूयमानञ्चतद्रूपममरैः सन्निवेशयेत्"।।

एवमुक्तस्वरूपां ध्यात्वा सपुष्पाक्षतमादाय

ॐ एहि दुर्गे महाभागे रक्षार्थम्मम सर्वदा।
आवाहयाम्यहं देवि सर्वकामार्थसिद्धये।।
अस्यां मूर्त्तौ समागच्छ स्थितिं मत्कृपया कुरु।
रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तुते।।

ॐ भगवति दुर्गे इहागच्छ इह तिष्ठ इह सन्निधेहि। इह स्थिरा भव सुप्रसन्ना भवेत्यावाहनादि विधाय, सौवर्णादिपात्रे पुष्पचन्दनयुतं पाद्योदकं निधाय, ॐ जयन्तीमङ्गलाकालीत्यादि, ॐ दुर्गे दुर्गे रक्षिणि स्वाहा इति वा मन्त्रमुच्चार्य्य इदं पाद्यं दुर्गायै नम इति पाद्योदकं दत्वा, सुवर्णाद्यन्यतमपात्रस्थकुङ्कुमविल्वपत्राक्षतपुष्पदधिदूर्वाकुशाग्रत्रयतिलयवैरर्घं संपाद्य मूलमन्त्रमुच्चार्य्य, एषोर्घ ॐ दुर्ग्गायै नम इत्यर्घं दत्त्वा, मूलमन्त्रमुच्चार्य्य, इदमाचमनीयं, इदं स्नानीयं ॐ दुर्ग्गायै नम इति दत्वा, दधिमधुघृतमेलकात्मकं मधुपर्कमुपनीय मूलमन्त्रमुच्चार्य्य, एष मधुपर्कः ॐ दुर्ग्गायै नम इति दद्यात्। मूलमन्त्रमुच्चार्य्य, इदं पुनराचमनीयं ॐ दुर्ग्गायै नम इति नैवेद्यम्, मूलमन्त्रमुच्चार्य्य इदमनुलेपनं ॐ दुर्ग्गायै नम इति चन्दनकुङ्कुमादिनानुलिप्य, मूलमन्त्रमुच्चार्य्य ॐ दुर्ग्गायै नम इति पुष्पाञ्जलित्रयेण पूजयेत्।

विल्वपत्राण्यञ्जलिनाऽऽदाय

ॐ अमृतोद्भवं श्रीवृक्षं शङ्करस्य सदाप्रियम्।
विल्वपत्रं प्रयक्षामि पवित्रन्ते सुरेश्वरि।

"ॐ दुर्गायै नम" इति निवेदयेत्।

द्रोणपुष्पाण्यादाय

ॐ ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम्।
तत्ते दुर्गे प्रयक्षामि सर्वकामार्थ सिद्धये।।

"ॐ दुर्गायै नम" इति दद्यात्। जातीचम्पकपद्मकुमुदमल्लिका-करवीरजवादिकुसुमैर्य्यथालाभमर्चयेत्। अगुरुगुग्गुलप्रभृतिधूपद्रव्यं पात्रस्थज्वलिताङ्गारेषु निःक्षिप्य मूलमन्त्रमुच्चार्य्य एष धूपः ॐ दुर्गायै नम इति दद्यात्। एवं मूलमन्त्रमुच्चार्य्य एष दीपः, एतानि नैवेद्यानि, एतानि ताम्बूलानि, इदं हिरण्यमग्निदैवतम्, एतानि मुक्तारत्नानि वरुणदैवतानि, इदं छत्रमुत्तानाङ्गिरोदैवतम्, एतानि वासांसि वृहस्पति-दैवतानि, ॐ दुर्गायै नम इत्युत्सृजेत्। एवं पूजा विदध्यात्।

## ।। अथावरणपूजा।।

तत्र देव्या दक्षिणदिशि सपुष्पाक्षतमादाय सम्बोधनपदेनावाह्य स्थापयित्वा पाद्यादिभिरुपचारैः पूजयेत्।

ॐ ह्रीं जयन्त्यै नमः। ॐ ह्रीं मङ्गलायै नमः। ॐ ह्रीं काल्यै नमः। ॐ ह्रीं भद्रकाल्यै नमः। ॐ ह्रीं कपालिन्यै नमः। ॐ ह्रीं दुर्गायै नमः। ॐ ह्रीं क्षमायै नमः। ॐ ह्रीं शिवायै नमः। ॐ ह्रीं धात्र्यै नमः। ॐ ह्रीं स्वधायै नमः। पूर्वभागे ह्रीं बीजमेव दत्त्वा देव्याः शक्तिं प्रपूजयेत्। ॐ ह्रीं उग्रचण्डायै नमः। ॐ ह्रीं प्रचण्डायै नमः। ॐ ह्रीं चण्डोग्रायै नमः। ॐ ह्रीं चण्डनायिकायै नमः। ॐ ह्रीं चण्डायै नमः। ॐ ह्रीं चण्डवत्यै नमः। ॐ ह्रीं चण्डरूपायै नमः। ॐ ह्रीं चण्डिकायै नमः। वामदिशि ह्रींकारमेवप्रक्षिप्य। ॐ ह्रीं उग्रदंष्ट्रायै नमः। ॐ ह्रीं महादंष्ट्रायै

नमः। ॐ ह्रीं शुभदंष्ट्रायै नमः। ॐ ह्रीं करालिन्यै नमः। ॐ ह्रीं भीमनेत्रायै नमः। ॐ ह्रीं विशालाक्ष्यै नमः। ॐ ह्रीं मङ्गलायै नमः। ॐ ह्रीं विजयायै नमः। ॐ ह्रीं जयायै नमः। देवीपुरः ॐ ह्रीं पदमेव दत्वा ॐ ह्रीं मङ्गलायै नमः। ॐ ह्रीं नन्दिन्यै नमः। ॐ ह्रीं भद्रायै नमः। ॐ ह्रीं लक्ष्म्यै नमः। ॐ ह्रीं कीर्त्यै नमः। ॐ ह्रीं यशस्विन्यै नमः। ॐ ह्रीं पुष्ठ्यै नमः। ॐ ह्रीं मेधायै नमः। ॐ ह्रीं शिवायै नमः। ॐ ह्रीं साध्व्यै नमः। ॐ ह्रीं यशायै नमः। ॐ ह्रीं शोभायै नमः। ॐ ह्रीं जयायै नमः। ॐ ह्रीं धृत्यै नमः। ॐ ह्रीं आनन्दायै नमः। ॐ ह्रीं सुनन्दायै नमः।

अथ दक्षिणे। सकलाञ्चतुःषष्ठिदेव्यो द्वात्रिंशत्षोडशाष्ट वा पूज्याः।

ॐ विजयायै नमः। ॐ मङ्गलायै नमः। ॐ भद्रायै नमः। ॐ धृत्यै नमः। ॐ शान्त्यै नमः। ॐ शिवायै नमः। ॐ क्षमायै नमः। ॐ सिद्ध्यै नमः। ॐ तुष्ट्यै नमः। ॐ उमायै नमः। ॐ पुष्ट्यै नमः। ॐ श्रियै नमः। ॐ ऋद्ध्यै नमः। ॐ रत्यै नमः। ॐ दीप्तायै नमः। ॐ कान्त्यै नमः। ॐ यशायै नमः। ॐ लक्ष्म्यै नमः। ॐ ईश्वर्य्यै नमः। ॐ बृद्ध्यै नमः। ॐ शाक्यै नमः। ॐ जयावत्यै नमः। ॐ ब्राह्मयै नमः। ॐ जयन्त्यै नमः। ॐ अपराजितायै नमः। ॐ अजितायै नमः। ॐ मानस्यै नमः। ॐ श्वेतायै नमः। ॐ दित्यै नमः। ॐ मायायै नमः। ॐ महामायायै नमः। ॐ मोहिन्यै नमः। ॐ रतिलालसायै नमः। ॐ तारायै नमः। ॐ विमलायै नमः। ॐ गौर्य्यै नमः। ॐ शरण्यायै नमः। ॐ कौशिक्यै नमः। ॐ मत्यै नमः। ॐ दुर्गायै नमः। ॐ क्रियायै नमः। ॐ अरुन्धत्यै नमः। ॐ घन्टायै नमः। ॐ कर्णायै नमः। ॐ कपालिन्यै नमः। ॐ रौद्रायै नमः। ॐ काल्यै नमः। ॐ मयूर्य्यै नमः। ॐ त्रिनेत्रायै नमः। ॐ स्वरूपायै नमः। ॐ रिपुहायै नमः। ॐ अम्बिकायै नमः। ॐ चर्चिकायै नमः। ॐ सुरपूजितायै नमः। ॐ वैवस्वत्यै नमः। ॐ कौमार्य्यै नमः। ॐ माहेश्वर्य्यै नमः। ॐ वैष्णव्यै नमः। ॐ महालक्ष्म्यै नमः। ॐ कार्त्तिक्यै नमः। ॐ शिवदूत्यै नमः। ॐ कौशिक्यै नमः। ॐ चामुण्डायै नमः।

इति प्रत्येकमावाह्य स्थापयित्वा पाद्यादिभिरुपचारैः पूजयेत्।

## ।। अथ मातरः।

ॐ ब्रह्माण्यै नमः। ॐ माहेश्वर्य्यै नमः। ॐ कौमार्य्यै नमः। ॐ वैष्णव्यै नमः। ॐ वाराह्यै नमः। ॐ इन्द्राण्यै नमः। ॐ चामुण्डायै नमः। ॐ महालक्ष्म्यै नमः।

इति पूर्वादिदिक्षुमध्ये चण्डिकां पूजयेत्। मातृणां पुरो भागे ॐ भैरवाय नमः इति पाद्यादिभिरुपचारैः पूजयेत्।

भैरवं परमं देवं सर्वकामप्रसाधकम्।
पूजयेदूर्ध्वतो देव्यास्सर्वाभीष्टफलप्रदम्।।

## ।। अथाङ्गानि।।

ॐ कालिकालि स्वाहा हृदयाय नमः। ॐ कालिवज्रिणि शिरसे नमः। ॐ कालिकालेश्वरि शिखायै नमः। ॐ कालिवज्रेश्वरि कवचाय नमः इत्याग्नेयादिषु ॐ कालिलोहदण्डायै अस्त्राय नमः इति पूर्वादिषु। ॐ कालिकालि वज्रेश्वरि लोहदण्डायै स्वाहा नेत्रत्रयाय नम इति देव्यग्रे पूजयेत्।

## ।। अथ पञ्चवक्त्राणि।।

ॐ ईशानाय नमः। इति शिरसि। ॐ कालिकालितत्पुरुषाय नम इति मुखे। ॐ वज्रेश्वरि अघोराय नम इति हृदये। ॐ लोहदण्डायै वामदेवाय नम इत्यधः। ॐ स्वाहा सद्यो जाताय नम इति सर्वाङ्गेषु पूजयेत्।

## ।। अथास्त्राणि।।

दक्षिण हस्ते पूर्वतः ओं त्रिशूलाय नमः। ओं चक्राय नमः। ओं तीक्ष्णवाणाय नमः। ॐ शक्त्यै नमः। वामहस्तेषूर्ध्वतः। ओं खेटकाय नमः। ॐ पूर्णचापाय नमः। ओं पाशाय नमः। ओं अङ्कुशाय नमः। ओं

घण्टाय नमः। इति पूजयेत्। ओं वज्रनखदंष्ट्रायुधाय महासिंहाय हूँ फट् नम इति सिंहासनम्पूजयेत्। ततः पुष्पाञ्जलित्रयेण देवीं पूजयेत्।

## ।। अथ काम्यानि।।

तत्र घृताभ्यङ्गस्य भविष्यपुराणे

वर्षपद्मसहस्त्रैस्तु यत्पापं समुपार्ज्जितम्।
तत्सर्वम्बिलयय्याँति तोयेनलवणय्यँथा।।
घृताभ्यङ्गेन देव्यास्तु कृतेनविधिवन्नृप।
तस्मादभ्यञ्जयेद्भक्त्यानित्यं भगवतीन्नृप।।

उपक्रमस्थघृताभ्यङ्गेनेत्यत्र एकत्र श्रुतेर्नित्यमवश्यमेकस्मात्तदेव चेत्फलं तदा वृत्तफललाभार्थम्प्रत्यहमपि कुर्य्यादिति वाक्यार्थः। ओं अद्यवर्षपद्मसहस्त्र समुपार्ज्जितपापक्षयकामोमुनाघृतेन दुर्गादेवीमहमभ्यञ्जयिष्ये। सौवर्णादि-प्रतिमायामिदमभ्यङ्गस्नपनादि तत् क्षमत्वात्। मृण्मयप्रतिमायान्तु निवेदन-मात्रमादर्शप्रतिबिम्बितायां वा कर्त्तव्यम्। अभ्यङ्गेविहित शास्त्रीयघृतपलम् २५। यवगोधूमलोध्रवल्कलचूर्णेन विरुक्षणमत्राङ्गम्। अथघृतस्नपननिम्व-पत्रविरुक्षणस्य।

भविष्ये

घृतेनपयसादध्नास्नापयेच्चण्डिकां नृप।
निम्वपत्रैश्च गन्धाद्यैर्घर्षयेद्यत्नतस्ततः।।
गोसहस्त्रशते दत्ते यत्फलं पुष्करेस्मृतम्।
तत्फलंलभते वीर देव्या उद्वर्त्तनेकृते।।

उद्वर्त्तनेफलश्रवणात् निरपेक्षतत्तद्घृतादिस्नानत्रयमङ्गम्। गन्धाढ्यैः सुरभिद्रव्यान्तरापादितोत्कृष्टगन्धैः।।

सुरभिद्रव्याणि देवीपुराणे

नागकेशरकर्पूरमुरामांस्यः सवालकाः।
उद्वर्त्तनेसमाख्याताः सत्वचा मातरप्रियाः।।

त्वचं पतरख इति प्रसिद्धम्। ओं अद्य पुष्कराधिकरणकगोसहस्रशत-दानजन्यफलसमफलप्राप्तिकामो दुर्गादिव्याधृतस्नपनोत्तरगन्धाढ्यनिम्वपत्र-विरुक्षणमहङ्करिष्ये। स्नानेविहितशास्त्रीयघृतादिपलम् १०८। "ओं ह्रीं दुर्गायै नम" इति निवेदनं सर्वत्र।

नवम्यां घृतस्नपनस्य

नवम्यां शुक्लपक्षे तु विधिवच्चण्डिकां नृप।
घृतेन स्नपयेद्यस्तु तस्य पुण्यफलं शृणु।
दशपूर्वान् दशपरानात्मानञ्च विशेषतः।
भवार्णवात्समुद्धृत्य दुर्गालोके महीयते।

विशेषतो महीयत इत्यन्वयः। ओं अद्य महानवम्यां दशपूर्वदश-परात्मीयपुरुषसहितात्मभवार्णवसमुद्धरणपूर्वकदुर्गालोकमहितत्वकामोऽमुना घृतेन भगवतीं दुर्गादेवीमहं स्नपयिष्ये।

दुग्धस्नपनस्य

क्षीरेण स्नपयेद्यस्तु श्रद्धाभक्तिसमन्वितः।
चण्डिकां विधिवद्वीर इन्द्रलोके महीयते।।

ओं अद्य इन्द्रलोकमहितत्वकामोऽमुना दुग्धेन भगवतीं दुर्गादेवीमहं स्नपयिष्ये।

दधिस्नपनस्य

स्नपयेद्विधिना वीर दध्ना दुर्गां महीपते।
राजतेन विमानेन शिवलोके महीयते।।

ओं अद्य राजतविमानकरणकशिवलोकमहितत्वकामोऽमुना दध्ना भगवतीं दुर्गादेवीमहं स्नपयिष्ये।

पञ्चगव्यस्नपनस्य

पञ्चगव्येन यो दुर्गां तथा च कुशवारिणा।
स्नापयेद्विधिवन्मन्त्रैर्ब्रह्मस्नानं हि तत्स्मृतम्।।

तथैतिश्रवणात्, च श्रुतेश्च कुशवारिणा समुचयः।

एकाहमपि यो भक्त्या पञ्चगव्येन चण्डिकाम्।
स्नापयेन्नृपशार्दूल स गच्छेत्सुरभीपुरम्।।

अनेन साकांक्षब्रह्मस्नान एव फलकथनम्। पञ्चगव्येनेति प्रतीकेनोपस्थाव्य वाक्यैकवाक्यतानुरोधात्। ओं अद्य सुरभीपुरगमन-कामोऽमुनाकुशवारियुतपञ्चगव्येन भगवतीं दुर्गादेवीमहं स्नपयिष्ये। नारायण्यै विद्महे चण्डिकायै धीमहि तन्नश्चण्डी प्रचोदयादिति कालिकापुराणे देवीस्नानमन्त्र उक्तः। नवाक्षरदुर्गामन्त्रोऽपि।

घृतक्षीरयुक्तकपिलापञ्चगव्यस्नपनस्य

कपिलापञ्चगव्येन घृतक्षीरयुतेन च।
स्नानं शतगुणं प्रोक्तमितरेभ्यो नराधिप।।

ऊँ अद्य घृतप्रभृतीतरस्नानद्रव्यकरणकदुर्गादेवीस्नपनजन्यफल-शतगुणफलप्राप्तिकामोऽमुना घृतक्षीरयुतकपिलापञ्चगव्येन दुर्गादेवीमहं स्नपयिष्ये।

पञ्चामृतस्नपनस्य

शिवरहस्ये

ये मेरुमूर्ध्निसुरसंघकृताभिषेकां
पञ्चामृतैर्गिरिसुतामभिषेचयन्ति।
ते दिव्यकल्पमनुभूय सुरेशराज्यं
राज्याभिषेकमतुलं पुनराप्नुवन्ति।।

ऊँ अद्य दिव्यकल्पशतावच्छिन्नसुरेशराज्यभुक्त्युत्तरातुलराज्याभिषेक-प्राप्तिकामोऽमुना पञ्चामृतेन भगवतीं दुर्गादेवीमहं स्नपयिष्ये। स्नेहद्रव्य-स्नपने सर्वत्र यवगोधूमविल्वपत्रादिचूर्णेन विरुक्षणं सुखोष्णवारिणा स्नपनञ्च।

अथेक्षुरसस्नपनस्य भविष्ये

चण्डिकां स्नपयेद्यस्तु नरश्चेक्षुरसेन च।
गैरिकेण स यानेन विष्णुना सह मोदते।।

गैरिकेण सौवर्णेन। ओं अद्य गैरिकयानकरणकविष्णुसहहर्ष-कामोऽमुनेक्षुरसेन दुर्गादेवीमहं स्नपयिष्ये।

मधुस्नपनस्य

पितृनुद्दिश्य यो दुर्गां मधुना पायसेन च।
स्नापयेद्विधिवद्भक्त्या तस्य पुण्यफलं शृणु।
तृप्ता भवन्ति पितरस्तस्य वर्षशतद्वयम्।

ओं अद्य वर्षशतद्वयावच्छिन्नपितृतृप्तिकामोऽमुना मधुना दुर्गादेवीमहं स्नपयिष्ये। एवं पायसस्नपनेऽपि। स्नपनद्वयसमुच्चये फलमित्येके।।

उदकादिस्नपनस्य

पौणमास्यां नवम्यां वा अष्टम्यां वा नराधिप।
स्नापयित्वा शुभां दुर्गां वाजपेयफलं लभेत्।।

अत्र द्रव्यविशेषानुपदेशादुदकेनापिफलम्। ऊँ अद्य महाष्टम्यां महानवम्यां वा वाजपेययज्ञजन्यफलसमफलप्राप्तिकामोऽमुना तोयेन दुर्गादेवीमहं स्नपयिष्ये।।

चन्दनवारिस्नपनस्य

स्नापयित्वा नरो दुर्गां गन्धचन्दनवारिणा।
चन्द्रांशुनिर्मलश्रीमच्चन्द्रलोके महीयते।।

ओं अद्य चन्द्रांशुनिर्मलश्रीमच्चन्द्रलोकसहितत्वकामोऽमुना सुरभि-चन्दनवारिणा दुर्गादेवीमहं स्नपयिष्ये।

सुरभिपुष्पतोयस्नपनस्य

सुगन्धिपुष्पतोयेन स्नपयित्वा नरः शिवाम्।

नागलोकं समासाद्य क्रीडते सह पन्नगैः।।

ॐ अद्य नागलोकप्राप्तिपूर्वकबहुपन्नगसहक्रीडनकामोऽमुना सुरभिपुष्पतोयेन दुर्गादेवीमहं स्नपयिष्ये।

द्रोणपुष्पाद्यन्यतमयुतवारिस्नपनस्य

द्रोणपुष्पं विल्वपत्रं करवीरोत्पलानि च।
स्नानकाले प्रयोज्यानि देव्यै प्रीतिकराणि च।।
एषामेकतमं स्नानं कृत्वा वै श्रद्धयाऽन्वितः।
भगवत्यै नरो भक्त्या विष्णुलोके महीयते।।

ॐ अद्य दुर्गाप्रीतिविष्णुलोकमहितत्वकामोऽमुना द्रोणपुष्पयुतवारिणा दुर्गादेवीमहं स्नपयिष्ये। विल्वपत्रकरवीरोत्पलान्यतमयुतवारिस्नपनेऽप्येतदेवफलम्।

हेमवारिस्नपनस्य

स्नापयित्वा नरो दुर्गां श्रद्धया हेमवारिणा।
सौवर्णं यानमारूढो वसुभिः सह मोदते।।

ॐ अद्य सौवर्णयानारोहणपूर्वकवसुसहहर्षकामोऽमुना हेमवारिणा दुर्गादेवीमहं स्नपयिष्ये।

रत्नवारिस्नपनस्य

रत्नोदकेन विधिवत् स्नापयेद्यस्तु मानवः।
स दिव्ययानमारूढो मोदते हरिणा सह।।

ॐ अद्य दिव्ययानारोहणपूर्वकहरिसहहर्षकामोऽमुना रत्नवारिणा दुर्गादेवीमहं स्नपयिष्ये।

कर्पूरवारिस्नपनस्य

स्नापयेद्यस्तु वै देवीं नरः कर्पूरवारिणा।
स गच्छति परं स्थानं यत्र सा चण्डिका स्थिता।।

ऊँ अद्य चण्डिकाधिष्ठितपरमस्थनगमनकामोऽमुना कर्पूरवारिणा दुगदिवीमहं स्नपयिष्ये।

अगुरुवारिस्नपनस्य

चण्डिकां स्नपयित्वा तु श्रद्धयाऽगुरुवारिणा।
इन्द्रलोकं समासाद्य क्रीडते सह किन्नरैः।।

ऊँ अद्य इन्द्रलोकप्राप्तिपूर्वकवहुकिन्नरसहक्रीडनकामोऽमुनाऽगुरु-वारिणा दुगदिवीमहं स्नपयिष्ये।

ऊँ ह्रीं दुर्गायै नम इति सर्वत्र निवेदनम्। तदुक्तम् -

चतुरक्षरमन्त्रेण पाद्यादीनथ षोडश।
वितरेदुपचारांस्तु पूर्वप्रोक्तांस्तु भैरव।।

ह्रीमिति चतुरक्षरमन्त्रः।

।। अथार्घः।।

पुष्पोदकार्घस्य

तत्र भविष्ये

दत्वाऽर्घं विधिवद्भक्त्या दुर्गायै पुष्पवारिणा।
सम्पूज्यमानोगन्धर्वैरमते दिवि देववत्।।

ऊँ अद्य गन्धर्वपूज्यमानत्वस्वर्गलोकाधिकरणकदेववत्क्रीडनकाम इमं पुष्पौदकार्घं भगवत्यै दुगदिव्यै तुभ्यमहं ददे।

गन्धोदकार्घस्य

दत्वा गन्धोदकेनेह गन्धर्वसदने वसेत्।

अर्घमित्यनुषज्यते। ऊँ अद्य गन्धर्वसदनवासकाम इमं गन्धोदकार्घं भगवत्यै दुगदिव्यै तुभ्यमहं ददे।

पञ्चगव्यार्घस्य

पञ्चगव्येन दत्वा तु पञ्चचूडालयं व्रजेत्।
पञ्चचूडः पञ्चवक्त्रः शिव इति यावत्।

ॐ अद्य पञ्चचूडालयगमनकाम इमं पञ्चगव्यार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

द्वादशाङ्गार्घस्य

द्वादशाङ्गेन योऽर्घेण चण्डिकां पूजयेन्नरः।
दशपद्मसहस्त्राणि वर्षाणां मोदते दिवि।।

ॐ अद्य दशपद्मसहस्त्रवर्षावाच्छिन्नस्वर्गाधिकरणकहर्षकाम इमं द्वादशाङ्गार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

आपः क्षीरं कुशाग्राणि अक्षता दधितण्डुलाः।
सहा सिद्धार्थका दूर्वा कुंकुमं रोचना मधु।।

अर्घोऽयं कुरुशार्दूल द्वादशाङ्ग उदाहृतः। अक्षता यवाः। सहा सहदेवा औषधी घिउकुमारीति प्रसिद्धा। रोचना गोरोचना। सिद्धार्थः सितसर्षपः। द्वादशाङ्गार्घमुपक्रम्य, अनेन पूजयेद्यस्तु स याति परमं पदं।। ॐ अद्य परमपदप्राप्तिकाम इमं द्वादशाङ्गार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

अष्टाङ्गार्घस्य

योऽष्टाङ्गमर्घमापूर्य्य देव्यामूर्ध्नि निवेदयेत्।
दशवर्षसहस्त्राणि दुर्गालोके महीयते।।

ॐ अद्य दशवर्षसहस्त्रावच्छिन्नदुर्गालोकमहितत्वकाम इममष्टाङ्गार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे। दुर्गाप्रीतिकामे वा आपः क्षीरंकुशाग्राणि दधि सर्पिः सतण्डुलाः।। तिलाः सिद्धार्थकाश्चैव अष्टाङ्गोर्घः प्रकीर्त्तितः। भविष्यपुराणे रक्तविल्वाक्षतैः पुष्पैः दधिदूर्वाकुशैस्तिलैः। सामान्यः सर्वदेवानामर्घोऽयं परिकीर्त्तितः। रक्तं कुङ्कुमम्। देवानामिति पुंस्त्वम-

**विवक्षितम्**। देवीनामपि प्रक्रान्तत्वात्। सोऽयं सामान्यार्घ एव जलेन सह नवाङ्गार्घः। तत्र फलान्तराश्रवणादग्रेतनं गुणफलम्।

दारुपात्रार्घस्य

दारवेणार्घपात्रेण दत्वाऽर्घं विधिवन्नृप।
देव्यै तदा महाराज अग्निष्टोमफलं भवेत्।।

ॐ अद्याग्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम इमं दारुमयपात्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

मृत्पात्रार्घस्य

मृत्पात्रेण नरो दत्वा वाजपेयफलं भवेत्।

ॐ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिकाम इमं मृन्मयपात्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

ताम्रपात्रार्घस्य

ताम्रपात्रार्घदानेन पुण्डरीकफलं भवेत्।

ॐ अद्य पुण्डरीकयज्ञजन्यफलसमफलप्राप्तिकाम इमं ताम्रपात्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

पलाशपद्मपत्रान्यतमार्घस्य

पलाशपद्मपत्राभ्यां गोसहस्त्रफलं भवेत्।

ॐ अद्य गोसहस्त्रदानजन्यफलसमफलप्राप्तिकाम इमं पलाशपत्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे। पद्मपत्रकरणकार्घेऽप्येतदेव फलम्।

रौप्यपात्रार्घस्य

रौप्यपात्रेण दत्वा वै विष्णुयागफलं भवेत्।

ॐ अद्य विष्णुयागजन्यफलसमफलप्राप्तिकाम इमं रौप्यपात्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

सौवर्णपात्रार्घस्य

दत्वा सौवर्णपात्रेण लभेद्वहुसुवर्णकम्।

वहुसुवर्णकं वहुसुवर्णो यज्ञविशेषस्तत्फलमित्यर्थः। ऊँ अद्य वहुसुवर्णकयज्ञजन्यफलसमफलप्राप्तिकाम इमं सुवर्णपात्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

हेमपात्रेण सामान्यार्घस्य

सामान्यः सर्वदेवानामित्युपक्रम्य,

हेमपात्रेण सर्वाणि ईप्सितानि लभेन्मुने।

ऊँ अद्य सर्वेप्सितप्राप्तिकाम इमं हेमपात्रकरणकार्घं भगवत्यै दुगदिव्यै तुभ्यमहं ददे। सामान्यार्घे द्रव्याणि। कुङ्कुमविल्वपत्राक्षतपुष्पदधि-दूर्वाकुशतिलजलानि।

रौप्यपात्रार्घस्य

अर्घं कृत्वा तु रौप्येण आयूराज्यशुभाल्लँभेत्।

ऊँ अद्य दीर्घायुष्ट्वराज्यशुभावाप्तिकाम इमं रौप्यपात्रकरणकार्घं भगवत्यै दुर्गादेव्यै तुभ्यमहं ददे।

ताम्रपात्रार्घस्य

ताम्रपात्रेण सौभाग्यफलम्।

ऊँ अद्य सौभाग्यप्राप्तिकाम इमं ताम्रपात्रकरणकार्घम्भगवत्यै दुगदिव्यै तुभ्यमहं ददे।

## ।। अथानुलेपनम् ।।

तत्र भविष्ये

चन्दनानुलेपनस्य चन्दनेन विलिप्यार्य्याग्निष्टोमफलं लभेत्। आर्य्या दुर्गा। ऊँ अद्याग्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकामश्चन्दनेन दुर्गा देव्या

अनुलेपनमहं करिष्ये।

कुंकुमानुलेपनस्य

कुंकुमेन विलिप्यार्य्याङ्गोसहस्रफलं भवेत्।

ॐ अद्य गोसहस्रदानयज्ञजन्यफलसमफलप्राप्तिकामः कुंकुमेन दुर्गा देव्या अनुलेपनमहं करिष्ये।

कृष्णागुरुणाऽनुलेपनस्य

विलिप्य कृष्णागुरुणा वाजपेयफलम्भवेत्।

ॐ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिकाम कृष्णागुरुणा दुर्गा देव्या अनुलेपनमहं करिष्ये।

कस्तूरिकानुलेपनस्य

गन्धानुलेपनं कृत्वा ज्योतिष्टोमफलं लभेत्।

गन्धः कस्तूरिका। ॐ अद्य ज्योतिष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम कस्तूरिकया दुर्गादेव्या अनुलेपनमहं करिष्ये।

देवीपुराणीय कर्पूरानुलेपनस्य

चन्द्राख्यं लेपनं देयं सर्वसिद्धिप्रदायकम्।

चन्द्रः कर्पूरः। ॐ अद्य सर्वसिद्धिप्राप्तिकामः कर्पूरेण दुर्गादेव्या अनुलेपनमहं करिष्ये।

त्रिसमानुलेपनस्य भविष्ये

चन्दनागुरुकर्प्पूरैर्य्यस्तु दुर्गां विलेपयेत्।

स स्वर्गेकशतं दिव्यं शक्रलोके महीयते।।

चन्दनागुरुकर्प्पूरैः समभागैः समं स्यादश्रुतत्वादिति न्यायात्। स्वमेकः संवत्सरः। दिव्यं दैवम्। ॐ अद्य दिव्यसंवत्सरशतावच्छिन्नशक्रलोक-महितत्वकामश्चन्दनागुरुकर्प्पूरैर्दुर्गादेव्या अनुलेपनमहं करिष्ये।

चतुस्समानुलेपनस्य

चन्दनागुरुकर्प्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः।
दुर्गामालिप्य विधिवत्कल्पकोटिं वसेद्दिवि।।

ऊँ अद्य कल्पकोट्यवच्छिन्नस्वर्गलोकाधिकरणकवासप्राप्तिकाम-श्चन्दनागुरुकर्प्पूरकुंकुमैर्भगवत्या दुर्गादेव्या अनुलेपनमहं करिष्ये।

चतुस्समानुलेपनस्य देवीपुराणे

मदकर्प्पूरकाश्मीरं रोचना च चतुष्टयम्।
एतेन लेपयेद्देवीं सर्वकामानवाप्नुयात्।।

मदः कस्तूरिका। काश्मीरं कुंकुमम्। रोचना गोरोचना। ऊँ अद्य सर्वकामावाप्तिकामोगोरोचनाकुंकुमकर्प्पूरकस्तूरिकाभिर्दुर्गादेव्या अनुलेपनमहं करिष्ये।

।। अथपुष्पाणि।।

तत्र देवीपुराणे विहितपुष्पमात्रस्य

तपः शीलगुणोपेते पात्रे वेदस्य पारगे।
दश दत्त्वासुवर्णा नियत्फलं कुसुमेषु तत्।।

सर्वत्र ब्राह्मणः पात्रम्। ऊँ अद्य तपःशीलगुणोपेतवेदपारगब्राह्मण-संप्रदानकदशस्वर्णदानजन्यसमफलप्राप्तिकाम एभिः कुसुमैर्भगवतीन्दुर्गा देवीमहं पूजयिष्ये। ऊँ ह्रीं दुर्गायै नमः इति निवेदयेत्।

अथ पुष्पविशेषस्य भविष्यपुराणे

मल्लिकामुत्पलं पद्मं शमी पुन्नागचम्पकम्।
अशोकं कर्णिकारञ्च द्रोणपुष्पं विशेषतः।।
करवीरं शमीपुष्पं कुकुदं नागकेशरम्।
यः प्रयच्छति पुण्यार्थं पुष्पाण्येतानि भारत।।
चण्डिकायै नरश्रेष्ठभक्त्या श्रद्धासमन्वितः।
सकामानलखिलान प्राप्य दुर्गायानुचरो भवेत्।।

सन्धिश्छान्दसत्वात्। ऊँ अद्याखिलकामावाप्तिपूर्वक दुर्गाऽनुचरत्वकामनयाऽमीभिर्म्मल्लिकापुष्पैर्भगवतीन्दुर्गादिवीमहं पूजयिष्ये। उत्पलपद्मशमीपत्रपुन्नगचम्पकाशोककर्णिकारद्रोणपुष्पकरवीरशमीपुष्पकुमुदनागकेशरपुष्पैः पूजनेऽप्येतदेवफलम्।

देवीपुराणे पुष्पविशेषस्य

पुन्नागश्चम्पकः कुन्दो यूथिकावकमल्लिकाः।
तगरार्जुनमल्ली च वृहती शतपत्रिका।।
तथा कुमुदकल्हारविल्वपाटलमालती।।
जवा विचकिलाशोकरक्तनीलोत्पलानि च।
दमनो मरुपत्रञ्च शतधापुण्य वृद्धये।।

ऊँ अद्य इतरपुष्पकरणकदेवीपूजनजन्यपुण्यशतगुणपुण्यवृद्धिकाम एभिश्चम्पकादिपुष्पैः भगवतीन्दुर्गा देवीमहं पूजयिष्ये। एवं वकादिपुष्पैः पूजनेऽप्येतदेवफलम्।

केतकीकुमुदादिनाऽर्चनस्य

केतकीचातिमुक्तञ्च वन्धूकवकुलान्यपि।
कदम्बः कर्णिकारञ्च सिन्दुवारः समृद्धये।।

ऊँ अद्य समृद्धिकाम एभिः केतकीकुसुमैर्भगवतीन्दुर्गादेवीमहं पूजयिष्ये। वन्धूकादिनाऽर्चनेऽप्येतदेवफलम्।

विल्वपत्रार्चनस्य कालिकापुराणे

सर्वतो विल्वपत्रन्तु देव्याः प्रीतिकरम्परम्।

ऊँ अद्य परमदुर्गाप्रीतिकाम एभिर्विल्वपत्रैर्भगवतीन्दुर्गादेवीमहं पूजयिष्ये।

देवीपुराणे अखण्डविल्वपत्रार्चनस्य

विल्वपत्रैरखण्डैर्य्यः सकृद्देवीं प्रपूजयेत्।
सर्वपापविनिर्मुक्तः शिवलोके महीयते।।

अखण्डैस्त्रिशिछद्रपत्रत्रयैः। ॐ अद्य सर्वपापविनिर्म्मुक्तत्वशिवलोक-महितत्वकाम एभिरखण्डविल्वपत्रैर्भगवतीन्दुर्गादेवीमहं पूजयिष्ये।

देवीपुराणे **विहितपुष्पपत्रान्यतमस्य**

भक्त्या निवेदयेत्सर्वं नाशुभं किञ्चिदाप्नुयात्।

ॐ अद्य सर्वाशुभानवाप्तिकाम एतानि पुष्पाणि विल्वपत्राणि वा भगवत्यै दुर्गादेव्यै तुभ्यमहन्निवेदयामि।

भविष्ये **असंग्रन्थितपुष्पाणाम्**

प्रत्येकं मुक्तपुष्पेषु दशनिष्कफलं नृप।

ॐ अद्येतावत् पुष्पसमसंख्यसुवर्णनिष्कदशतयदानजन्यफलसमफल-प्राप्तिकाम एतान्यसंग्रथितपुष्पाणि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

**संग्रथितपुष्पाणाम्**

स्रग्निवन्द्धेषु तेष्वेव द्विगुणं काञ्चनस्य तु।

काञ्चनस्य दशनिष्कफलद्विगुणफलमित्यर्थः। ॐ अद्यैतन्मालास्थपुष्प-समसंख्यसुवर्णनिष्कदशतयदानजन्यफल द्विगुणफलप्राप्तिकाम एतानि संग्रथितपुष्पाणि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

## ।। अथ पुष्पमालानाम्।।

तत्र भविष्ये **करवीरमालात्रयस्य**

करवीरस्रजोभिश्च पूजयेद्यस्तु चण्डिकाम्।
सोऽग्निष्टोमफलं लब्ध्वा सूर्य्यलोके महीयते।।

ॐ अद्याग्निष्टोमयज्ञजन्यफलसमफलप्राप्तिपूर्वकसूर्य्यलोकमहितत्वकाम आभिः करवीरमालाभिर्दुर्गादेवीमहं पूजयिष्ये। मूलमन्त्रमुच्चार्य्य। ॐ दुर्गायै नम इति निवेदयेत्।

।। अथ पद्ममालायाः ।।

पूजयित्वा नरोभक्त्या चण्डिकां पद्ममालया।
ज्योतिष्टोमफलं प्राप्य सूर्य्यलोके महीयते।।

ॐ अद्य ज्योतिष्टोमयज्ञजन्यफलसमफलप्राप्तिपूर्वकसूर्य्यलोकमहितत्व-कामनयाऽनया पद्ममालया दुर्गादेवीमहं पूजयिष्ये।

वकपुष्पमालात्रयस्य

वकपुष्पस्रजोभिस्तु पूजयेद्यस्तु चण्डिकाम्।
वाजपेयस्य यज्ञस्य फलं विन्दति मानवः।।

ॐ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिकाम आभिर्व्वकपुष्प-मालाभिर्दुर्ग्गादेवीमहं पूजयिष्ये।

द्रोणपुष्पमालात्रयस्य

द्रोणपुष्पस्रजोभिस्तु पूजयेद्यस्तु चण्डिकाम्।
राजसूयफलं प्राप्य शक्रलोके महीयते।।

ॐ अद्य राजसूययज्ञजन्यफलसमफलप्राप्तिपूर्वकशक्रलोकमहितत्वकाम आभिर्द्रोणपुष्पमालाभिर्भगवतीं दुर्गादेवीमहम्पूजयिष्ये।

शमीपुष्पमालानाम्

शमीपुष्पस्रजोभिश्च आर्य्यां सम्पूज्य श्रद्धया।
गोसहस्त्रफलं प्राप्य विष्णुलोके महीयते।।

आर्य्या दुर्गा। ॐ अद्य गोसहस्त्रदानजन्यफलसमफलप्राप्तिपूर्वक विष्णुलोकमहितत्वकाम एताभिः शमीपुष्पमालाभिर्भगवतीं दुर्गादेवीमहं पूजयिष्ये।

कुशपुष्पमालात्रयस्य

पूजयित्वा तु राजेन्द्र श्रद्धया विधिवन्नृप।
कुशपुष्पस्रजोभिस्तु पितृलोके महीयते।।

ॐ अद्य पितृलोकमहितत्वकाम एताभिः कुशपुष्पमालाभिर्भगवतीं दुर्गादेवीमहं पूजयिष्ये।

सुरभिद्रव्यवासितपुष्पमालायाः

सुगन्धिगन्धपुष्पैस्तु पूजयेद्यस्तु चण्डिकाम्।
मालाभिर्म्मालया वाऽपि सोऽश्वमेधफलं लभेत्।।
सुगन्धिगन्धपुष्पैः कर्प्पूरादिसुरभिद्रव्यावासितपुष्पैः।

ॐ अद्याश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामनयाऽनयासुरभिद्रव्यवासितपुष्पमालया दुर्गादेवीमहं पूजयिष्ये। सुगन्धिवासितजवाजातीप्रभृतिपुष्पमालानामप्येतदेवफलम्।

नवम्यां सगुग्गुलविल्वपत्रमालायाः

अग्निहोत्रपरे विप्रे वेदवेदाङ्गपारगे।
सुवर्णानां सुवर्णस्य शते दत्ते तु यत्फलं।।
तत्फलम् लभते राजन् पूजयित्वा तु चण्डिकाम्।
मालया विल्वपत्राणां नवम्यां गुग्गुलेन च।।
सुवर्णस्य हिरण्यस्य सुवर्णानां तोलकानाम्।

तदेवं शास्त्रीय सुवर्णतोलकशते दत्ते यत्फलं तदवाप्नुयादित्यर्थः। चश्रुतेर्गुग्गुलुना समुच्चयः। केचिदाहुः गुग्गुलुरत्नधूपार्थो धूपोपिहि पूजाप्रकार एव। अतएव पूजाहरिहरेऽपीत्थमेव व्याख्यातम्। ॐ अद्याग्निहोत्रनिरतवेदवेदाङ्गपारगब्राह्मणसंप्रदानकसुवर्णतोलकशतदानजन्यफलसमफलप्राप्तिकामोऽनया सगुग्गुलुविल्वपत्रमालया भगवतीं दुर्गादेवीमहम्पूजयिष्ये।

विल्वपत्रमालाद्वयस्य

मालाद्वयेन संपूज्य दुर्गादेवीं नराधिप।
विल्ववृक्षस्य पत्राणां राजसूयफलं लभेत्।।

ॐ अद्य राजसूययज्ञजन्यफलसमफलप्राप्तिकामो विल्वपत्रमालाद्वये-

नामुना भगवतीं दुर्गादेवीमहं पूजयिष्ये।

**नीलोत्पलमालानाम्**

नीलोत्पलस्रजोभिस्तु पूजयेद्यस्तु चण्डिकाम्।
वाजपेयफलं प्राप्य रुद्रलोके महीयते।।

ॐ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिपूर्वकरुद्रलोकमहितत्वकाम एताभिर्नीलोत्पलमालाभिर्भगवतीं दुर्गादेवीमहं पूजयिष्ये।

**नीलोत्पलसहस्रमालायाः**

नीलोत्पलसहस्रेण यो वै मालां प्रयच्छति।
दुर्गायै विधिवद्धीर तस्य पुण्यफलं शृणु।।
वर्षकोटिसहस्राणि वर्षकोटिशतानि च।
दुर्गायानुचरो भूत्वा रुद्रलोके महीयते।।

सन्धिश्छान्दसत्वात्। ॐ अद्य वर्षकोटिसहवर्षकोटिशतावच्छिन्न-दुर्गानुचरत्वभवनपूर्वक रुद्रलोकमहितत्वकामोऽनया नीलोत्पलसहस्रमालया भगवतीं दुर्गादेवीमहं पूजयिष्ये।

जातीपुष्पमालायाः

ॐ अद्य सौत्रामणियज्ञजन्यफलसमफलप्राप्तिपूर्वक विष्णुलोक-महितत्वकामोऽनया जातीकुसुममालया भगवतीं दुर्गादेवीमहं पूजयिष्ये।

अनुलिप्तसुगन्धिपुष्पपूजितदुर्गायास्तालवृन्तबीजनस्य

भविष्यपुराणे

विलिप्तां पूजयेद् दुर्गां दिव्यपुष्पाधिवासिताम्।
तालवृन्तेन संवीज्य महासत्रफलं लभेत्।।

अत्र लेपनानन्तरपूजनमङ्गं बीजने फलश्रवणात्। ॐ अद्य महासत्रजन्यफलसमफलप्राप्तिकामनया तालवृन्तेनानुलिप्तसुगन्धिपुष्पपूजितां भगवतीं दुर्गादेवीमहं बीजयिष्ये।

हेमपुष्पस्य देवीपुराणे

मणिमौक्तिकमालाश्च वितानञ्च दुकूलजम्।
घण्टादि सर्वदा दत्वा हेमपुष्पफलं लभेत्।।

ऊँ अद्य वहुमणिमौक्तिकमालादुकूलवितानघन्टादिसर्वकालिकदान-फलसमफलप्राप्तिकाम एभिर्हेमपुष्पैभगवत्या दुर्गादिव्याः पूजनमहङ्करिष्ये।

आदित्यपुराणे सुवर्णार्चनस्य

निवसन्ति शिवालोके सदा यज्ञैर्यजन्ति च।
सर्वदा न भयन्तेषां जायते नात्र संशयः।।
म्रियन्ते परितः पुत्रैः पोत्रैश्चैव समन्ततः।।
श्रिया सदैव जुष्यन्ते हेमपुष्पैः शिवार्चनात्।।

शिवा दुर्गा। ऊँ अद्य दुर्गालोकनिवाससार्वकालिकबहुयज्ञयाजित्व-सदाभ्याभावपुत्रपौत्रपरिवृतत्वसदाश्रीजुष्टत्वकाम एभिर्हेमपुष्पैर्भगवतीं दुर्गादेवीमहमर्चयिष्ये।

## ।। अथ धूपप्रकरणम्।।

तत्र भविष्यपुराणे गुग्गुलुर्धूपस्य

सर्वेषामेव धूपानां दुर्गायाः गुग्गुलुः प्रियः।

ऊँ अद्य दुर्गाप्रीतिकाम इमं गुग्गुलुधूपं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

सघृतगुग्गुलुधूपस्य

घृतयुक्तो विशेषेण सततं प्रीतिवर्द्धनः।

ऊँ अद्य सार्वकालिकदुर्गाप्रीतिविवृद्धिकाम इमं सघृतगुग्गुलधूपं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

धूपोऽयं देवदेवेशि घृतगुग्गुलुयोजितः।
गृहाण वरदे मातर्दुर्गे देवि नमोऽस्तुते।।

इति निवेदयेत्।

अगुरुधूपस्य

अगुरुं धूपमावेद्य वाजपेयफलं लभेत्।

ऊँ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिकाम इममगुरुधूपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

कृष्णागुरुधूपस्य

शित्यगुरुं नरो दत्त्वा गोसहस्रफलं लभेत्।

शित्यगुरुः कृष्णागुरुः। ऊँ अद्य गोसहस्त्रदानजन्यफसमफल प्राप्तिकाम इमं शित्यगुरुधूपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

सघृतमहिषाख्यगुग्गुलुधूपस्य

महिषाख्यं घृताक्तन्तु दग्ध्व विल्वमथापि वा।
वाजपेयफलं प्राप्य सूर्य्यलोके महीयते।।

विल्वमपि घृताक्तमेकसाधनतासम्बन्धात्। ऊँ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिपूर्वकसूर्य्यलोकमहितत्वकाम इमं सघृतमहिषाख्यगुग्गुलुधूपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

सघृतविल्वफलधूपस्य

ऊँ अद्य वालपेययज्ञजन्यफलसमफलप्राप्तिपूर्वकसूर्य्यलोकमहितत्वकाम इमं सघृतविल्वफलधूपं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

सकृष्णागुरुसघृतमहिषाष्यगुग्गुलुविल्वफलान्यतमधूपस्य

सकृष्णागुरुधूपेन प्रीणिता सर्वमंगला।
शोधयेत् पापकलिलं यथाऽग्निरिव काञ्चनम्।।

सकृष्णागुरुधूपेन कृष्णागुरुसहितसघृतमहिषाख्यगुग्गुलुविल्वफलधूपयोरन्यतरेण। ऊँ अद्य दुर्गाप्रीतिपूर्वकपापकलिलविशुद्धिकाम इमं सकृष्णागुरुसघृतविल्वफलधूपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

सकृष्णागुरुकर्प्पूरचन्दनसिह्लकधूपस्य।

कृष्णागुरुं सकर्प्पूरं चन्दनं सिह्लकन्तथा।
भगवत्यै नरो धूपमिमं दत्वा नराधिप।।
इह कामानवाप्याय्यान् दुर्गालोके महीयते।।

एषां समुदितानां धूपार्थत्वं तथापदस्वरसात्। इममिति समुचित-परामर्षोऽन्यथावृत्तिप्रसङ्गात्।। ॐ अद्यैहिकारस्य सकलकामावाप्ति-पूर्वक दुर्गालोकमहितत्वकाम इमं कृष्णागुरुकर्प्पूरचन्दनसिह्लकधूपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

मासार्द्धंसगुग्गुलुघृतधूपस्य

गुग्गुलुं सघृतन्दत्वा दुर्गायै भरतर्षभ।
मासार्द्धं विधिवद्भक्त्या गोसहस्रफलं लभेत्।।

ॐ अद्यादिगोसहस्त्रदानजन्यफलसमफलप्राप्तिकामनया मासार्द्धं सघृतगुग्गुलुधूपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

## ।। अथ दीपाः।।

घृतदीपस्य

तत्र भविष्यपुराणे

घृतदीपप्रदानेन चण्डिकां पूजयेन्नरः।
सोऽश्वमेधफलं प्राप्य दुर्गायानुचरो भवेत्।।

ॐ अद्याश्वमेधयज्ञजन्यफलसमफलप्राप्तिपूर्वकदुर्गानुचरत्वभवनकाम इमं घृतदीपं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

अग्निर्ज्योतीरविर्ज्योतिश्चन्द्रो ज्योतिस्तथैव च।
ज्योतिषामुत्तमो दुर्गे दीपोऽयं प्रतिगृह्यताम्।।

अनेन निवेदयेत्।

तैलदीपस्य

तैलदीपप्रदानेन पूजयित्वा तु चण्डिकाम्।
वाजपेयफलं प्राप्य मोदते सह किन्नरैः।।

तैलं तिलस्यैव। ॐ अद्य वाजपेययज्ञजन्यफलसमफलप्राप्तिपूर्वक-वहुकिन्नरसहहर्षकाम इमं तैलदीपं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

दुर्गागृहे दीपदानस्य नन्दिपुराणे

दीपं ददाति यो मर्त्यः सुरब्राह्मणवेश्मनि।
स दिव्येन तु यानेन महाभ्राभप्रभासिना।।
गच्छति स्वर्गमतुलं वसेत्तत्र समाशतम्।।

अत्र सुरग्रहणे पुंस्त्वस्याविवक्षणात् दुर्गासंप्रदानकमपीदं दीपदानम्।। ॐ अद्य महाभ्राभप्रभासिदिव्ययानकरणकस्वर्गगमनवर्षशतावच्छिन्न-स्वर्गवासकामनया भगवत्या दुर्गादिव्या गृहे दीपमहन्ददे।

दुर्गागृहे दीपप्रज्वालनस्य शिवरहस्ये

देदीप्यते सकनकोज्ज्वलपद्मरागरत्नप्रभाभरणहेममयविमानाधिकरणक-देदीप्यमानत्वदिव्याङ्गनापरिवृतत्वनयनाभिरामत्वकामो भगवत्या भवान्या भवने दीपप्रज्ज्वालनमहं करिष्ये।

शिवपुराणीयदीपदानस्य

दीपप्रदानं यो दद्याद्दैवते ब्राह्मणेषु च।
तेन दीपप्रदानेन अक्षय्याङ्गतिमाप्नुयात्।।

ॐ अद्याक्षय्यगतिप्राप्तिकाम इमं दीपं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

दीपवृक्षस्य भविष्यपुराणे

अश्मसारमयं कृत्वा नानादीपसमन्वितम्।
दीपवृक्षंसमृद्बोध्य दुर्गायाः पुरतो नृप।।
दत्वा कल्पायुतं साग्रं दुर्गालोके महीयते।

अश्मसारमयं लोहघटितम्। ॐ अद्य साग्रकल्पायुतसमयावच्छिन्न-

दुर्गालोकमहितत्वकाम इममश्मसारसमुद्बोधित नानादीपसमन्वितदीपवृक्षं भगवत्या दुर्गादेव्याः पुरतोऽहन्ददे।

कार्त्तिकामावश्यायां नवम्यां वा घृतदीपसंघातस्य कार्त्तिके कुर्य्यादित्युपक्रम्य

घृतेन कुरुशार्दूलामावास्यायान्तु शक्तितः।
विशेषतो नवम्यान्तु भक्त्या श्रद्धासमन्वितः।
यावन्तं दीपसंघातं घृतेनापूर्य्य बोधितम्।
तावत्कल्पसहस्राणि दुर्गालोके महीयते।

बोधितं कुर्य्यादित्यन्वयः। तावदित्यस्य दीपसंघातमित्यनेन द्वैतीय-विनियोगाद्दीपसंघातसमसंख्यया कल्पसहस्राणामवच्छेदः। ॐ अद्यैतद् घृतपूर्णदीपसंघात-समसंख्यकल्पसहस्रावच्छिन्नदुर्गालोकमहितत्वकाम इमं घृतपूर्णदीपसंघातं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

## ।। अथ नैवेद्यानि।।

तत्र भविष्यपुराणे गुडखण्डाज्यसम्मिश्रान्नस्य

गुडखण्डाज्यसम्मिश्रमन्नन्दत्वा नराधिप।
वैष्णवस्य फलं प्राप्य सूर्य्यलोके महीयते।।

वैष्णवस्य विष्णुदेवताकयागस्य। अन्नं पायसपिष्ठकपूरिकापूप-भक्तमण्डकप्रभृतिसिद्धान्नम्। ॐ अद्य वैष्णवयागजन्यफलसमफलप्राप्तिपूर्वक सूर्य्यलोकमहितत्वकाम एतानि गुडखण्डाज्यसम्मिश्रान्नानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

गुडादिकृतपक्वान्नानाम्

गुडखण्डकृतानाञ्च तथा शर्करया नृप।
घृतेन परिपक्वानां प्रदानाद्ब्रह्मणः पदम्।।

प्राप्नोतीति शेषः। ॐ अद्य ब्रह्मपदप्राप्तिकाम एतानि गुडसाधितघृत-

पक्वान्नानि खण्डसाधितघृतपक्वान्नानि वा शर्करासाधितघृतपक्वान्नानि वा भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

शाल्योदनादिनैवेद्यस्य

शाल्योदनं रसालाञ्च पानं वदरजन्तथा।
यः प्रयच्छतिदुर्गायै स गच्छति शिवालयम्।

शिवा दुर्गा। ॐ अद्य शिवालयगमनकामनया एतानि शालिभक्तानि सव्यंजनानि भगवत्यै दुर्गादेव्यै तुभ्यं मया दत्तानि।

रसालाभिवेदनस्य

ॐ अद्य शिवालयगमनकाम इमां रसालां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। रसालालक्षणं सूपकारशास्त्रे। इषदम्लदधिशर्करापयः-साधितेन्दुमरिचावचूर्णिता। एतयावसनपूतयानृणां को मदं न कुरुते रसालया। इन्दुः कर्प्पूरं।

वदरपानकस्य

ॐ अद्य शिवालयगमनकाम इमं वदरपानकं भगवत्यै दुर्गादि तुभ्यमहन्ददे।

पानकलक्षणं वैद्यकशास्त्रे

गौडमम्लमनम्लं वापानकं सुरभीकृतम्।।
तदेव खण्डमृद्वीकाशर्करासहितं पुनः।
साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम्।
परुषकाणां कौलानां हृद्यं विष्टम्भि पानकम्।।

कौलानां वदराणाम्।

घृतशर्करासहितपायसस्य

पायसं घृतसंयुक्तं शर्करासहितन्नरः।
यः प्रयच्छति दुर्गायै तस्य राज्यं करे स्थितम्।

ॐ अद्य करस्थितराज्यप्राप्तिकाम इमं सघृतशर्करपायसं भ [illegible] त्यै

दुर्गादिव्यै तुभ्यमहन्ददे।

सशर्करपायसस्य कालिकापुराणे

आमिच्छा परमान्नञ्च दधि चापि सशर्करम्।
महादेव्यै निवेद्यैव वाजिमेधफलं लभेत्।।

ॐ अद्याश्वमेधयज्ञजन्यफलसमफलप्राप्तिकाम इदं सशर्करपायसं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे। सशर्करदधिदानेऽप्येतदेव फलम्।

सघृतखण्डकृतापूपानाम्

ॐ अद्य ब्रह्मपदप्राप्तिकाम एतान् घृतखण्डकृतापूपान् भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

सखण्डघृतसाधितमोदकादीनां

ॐ अद्य ब्रह्मपदप्राप्तिकाम एतान् सखण्डघृतसाधितमोदकान् एतानि फेनकानि वा एतानि फाणितकानि वा भगवत्यै दुगदिव्यै तुभ्यमहन्ददे। फानितम् खण्डसरुकीतिप्रसिद्धम्। गुडशर्कराघृतकृतानां मोदकानामेतदेव फलम्।

सघृतशर्करशालिभक्तस्य

ॐ अद्य सौत्रामणियागजन्यफलसमफलप्राप्तिपूर्वकसूर्य्यलोकमहितत्व-कामनया एतानि सघृतशर्करशालिभक्तानि भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

केतकीकर्प्पूरवासितजलस्य भविष्ये

दुर्गामुद्दिश्यपानीयं केतकीशशिवासितम्।
यः प्रयच्छति राजेन्द्र सगणाधिपतिर्भवेत्।।

शशिवासितम् कर्प्पूरधूपितम्। ॐ अद्य गणाधिपतित्वकाम इदं केतकीकर्प्पूरवासितजलं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

नारिकेरादिफलदानस्य भविष्ये

आम्रञ्च नारिकेरञ्च खर्ज्जूरं बीजपूरकं।

यः प्रयच्छति दुर्गायै सयाति परमं पदं।।

ऊँ अद्य परमपदगमनकामनया एतानि नारिकेरफलानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। आम्रखर्ज्जूरबीजपूरकाणामन्यतमदानेप्येतदेव फलम्।

देवीपुराणे **फलदानस्य** फलमुपक्रम्य

भक्त्या निवेदयेत्सर्वं नाशुभं किञ्चिदाप्नुयात्।

ऊँ अद्य सर्वाशुभानवाप्तिकाम एतानि फलानि वनस्पतिदैवतानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

विष्णुधर्मोत्तरे **बहुफलदानस्य**

फलानि दत्वा देवेभ्यः सफलां विन्दति क्रियां।

ऊँ अद्य क्रियासाफल्यप्राप्तिकाम एतानिकदल्यादिफलानि वनस्पति-दैवतानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

**नारिकेरादि फलान्यतमस्य** कालिकापुराणे

लाङ्गलं क्रमुकं दत्वा रुचकं करमर्द्दकम्।
सौभाग्यमतुलं प्राप्य देवीलोके महीयते।।

लाङ्गूलं नारिकेलं क्रमुकं गुवाकफलम्। रुचकं बीजपूरकं। करमर्द्दकं पानीयामलकं। ऊँ अद्यातुलसौभाग्यप्राप्तिपूर्वकदेवीलोकमहितत्वकाम एतानि नालिकेरफलानि पूगफलानि बीजपूरकफलानि वा पानीयामलकफलानि वा वनस्पतिदैवतानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

**भक्ष्यादिनिवेदनस्य** कालिकापुराणे

भक्ष्यादिपञ्चकैर्द्देवी दत्तैरेवाति तुष्यति।
भक्ष्यंभोज्यञ्चलेह्यञ्च पेयञ्चोष्यञ्चपञ्चमम्।।
परमान्नं पिष्टकञ्च यावकं कृशरन्तथा।
मोदकं पृथुकादीनि कन्दुपक्वानि चोत्सृजेत्।।
हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम्।
निवेदयेन्महादेव्यै सर्वाणि व्यञ्जनानि च।।

क्षीरादीन्यथ गव्यानि माहिषाणि व सर्वशः।
सर्वेषांफलजातीनां मध्ये देवीप्रियं फलम्।।
लाङ्गलञ्च कपित्थञ्च द्राक्षाक्रमुकमेव च।
करकं रुचकं कोलं कूष्माण्डं पनसं तथा।।
बकुलञ्च मधूकञ्च रसालाम्रातके अपि।
अक्षोलं पिण्डखर्ज्जूरं करुणं श्रीफलं डहु।।
औदुम्बरञ्च पुन्नागं त्रिपुषं कर्कटीफलम्।
जाम्ववञ्चापि खर्ज्जूरं बीजपूरञ्च जम्भलम्।।
हरीतकी चामलकं षड्विधं नागरङ्गकम्।
शृंगाटकं कशेरुञ्च शालूकञ्च मृणालकम्।।
एवमादीनि चान्यानि देव्यै सर्वाणि चोत्सृजेत्।

सर्वत्र प्रत्येकं दुर्गापरमप्रीतिःफलम्।।

कोषकारस्य

ॐ अद्य बहुभोगभागित्वकामनया एते कोषकारदण्डा विष्णुर्दैवता भगवत्यै दुर्गादिव्यै तुभ्यं मया दत्ताः।

सुधूपितजलस्य

ॐ अद्य दुर्गाप्रीतिकामनया इदं सुधूपितजलं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

## ।। अथ ताम्बूलदानस्य।।

ॐ अद्य दुर्गाप्रीतिकामनया गन्धर्वलोकप्राप्तिपूर्वकविष्णुलोकगमन-कामनया वा एतानि ताम्बूलानि गन्धर्वदैवतानि भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

## ।। अथ वस्त्रदानस्य ।।

विष्णुधर्म्मोत्तरे

वस्त्रदानेन लोकेस्मिन् सुवेशस्त्वभिजायते।

ऊँ अद्यैतल्लोकाधिकरणकसुवेशत्वभवनकाम इदं वस्त्रं वृहस्पतिदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

तन्तुसन्तानसन्नद्धं रञ्जितं रागवस्तुना।
दुर्गे देवि भज प्रीतिं वासस्ते परिधीयताम् ।।

इति निवेदयेत्। एवमग्रेपि।

विचित्रवस्त्रदानस्य भविष्ये

वस्त्राणि सुविचित्राणि सूक्ष्माणि च मृदूनि च।
यः प्रयच्छति दुर्गायै स गच्छति शिवालयम् ।।
यावन्तस्तन्तवो धीर तेषु वस्त्रेषु कीर्त्तिताः।
तावद्वर्षसहस्राणि मोदते चण्डिकालये ।।

शिवालयं दुर्ग्गालयं। ऊँ अद्य शिवालयगमनैतद्वस्त्रतन्तुसमसंख्यवर्ष-सहस्रावच्छिन्नचण्डिकालयहर्षकाम एतानि सुविचित्रसूक्ष्मवस्त्राणि वृहस्पतिदैवतानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। विचित्रपट्टवस्त्र-दानेऽप्येतदेव फलम्।

## ।। अथालंकरणदानस्य ।।

मुकुटाद्यलंकरणस्य तत्र नन्दिपुराणे

अलंकारन्तु यो दद्याद्विप्रायाथ सुराय वा ।।
स गच्छेद्वारुणं लोकं नानाभरणभूषितः।
जातः पृथिव्यां कालेन ततो द्वीपपतिर्भवेत्।

अलङ्कारो मुकुटादि। सुरायेति पुंस्त्वस्याविवक्षणाद्दुर्गा-सम्प्रदानकदानेपीदं फलम्। ॐ अद्य नानाभरणभूषितात्मकर्तृक-वारुणलोकगमनपूर्वकैतल्लौकिकद्वीपपतित्वभवनकाम इदं हेममुकुटालङ्करणं वह्निदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। हेमकुण्डलकण्ठाभरण-कटककेयूराङ्गुरीयक काञ्चीनूपुरपादकटकपादाङ्गुरीयकान्यतमालङ्करण-दानेप्येतदेव फलम्।

विष्णुधर्म्मोत्तरे **अलङ्करणदानस्य**

विभूषणमलंकरणं किरीटादि। ॐ अद्य भूतलाधिकरणकराजत्व-भवनकामनया इदमलङ्करणं यथादैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। शंखरौप्यवलयहाराद्यलङ्करणदानेप्येतदेव फलम्।

**हेमतिलकस्य** भविष्ये

सुवर्णतिलकं यस्तु भगवत्यै प्रयच्छति।
सगच्छति परं स्थानं यत्र सापरमाकला।।

ॐ अद्य परमकलात्मकदुर्गाधिष्ठितपरमस्थानगमनकाम इदं कनकमय तिलकमग्निदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

हेमलोचनयोः

सौवर्णे अक्षिणीयस्तु चण्डिकायै प्रयच्छति।
गोसहस्त्रफलं प्राप्य सूर्य्यलोके महीयते।।

ॐ अद्य गोसहस्त्रदानजन्यफलसमफलप्राप्तिपूर्वकसूर्य्यलोकमहितत्व-काम इमे हेमलोचने वह्निदैवते भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

हेमकाञ्चीदानस्य

श्रोणींसूत्रप्रदानेन महीं सागरमेखलाम्।
प्रशास्ति निहतामित्रो नात्र कार्य्या विचारणा।।

ॐ अद्य शत्रुनिहननपूर्वकसागरवलयितमहीशासकत्वकाम इमां हेमकाञ्चीमग्निदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। काञ्ची श्रोणीसूत्रम्।

हेमनुपूरस्य

पादाभरणदानेन स्थानं सर्वत्र विन्दति।

ऊँ अद्य निखिलदुर्गाधिष्ठितस्थानलाभकाम इमौ हेमनुपूरौ वह्निदैवतौ भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

हेमपुष्पार्च्चनस्य सुवर्णानुवृत्तौ

यन्देवमर्च्चयेत्तेन यस्य चैव प्रयच्छति।
तस्य लोके निवसति।।

ऊँ अद्य दुर्गालोकाधिकरणकनिवासकाम एभिः सुवर्णपुष्पैर्भगवतीं दुर्गादेवीमहं पूजयिष्ये। दुर्गायै सुवर्णदानेप्येतदेवफलम्।

विष्णुधर्म्मोत्तरे सुवर्णदानस्य

नरः सुवर्णदानेन सर्वान कामानवाप्नुयात्।

ऊँ अद्य सर्वकामावाप्तिकाम इदं सुवर्णमग्निदैवतं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

वरवस्त्रदानस्य शिवरहस्ये

दोधूयतेकनकदण्डविराजितैश्च
सच्चामरैः प्रचलकुण्डलसुन्दरीभिः।
दिव्याम्वरस्त्रगनुलेपनभूषिताङ्गः
कृत्वामृडानिभवनेवरवस्त्रपूजाम्।।

मृडानी चण्डिका। ऊँ अद्य कनकदण्डविराजितवहुसच्चामर-करकणकप्रचलकुण्डलबहुसुन्दरीवीज्यमानत्व दिव्याम्वरस्त्रगनुलेपन-भूपिताङ्गत्वकाम इदं वरपट्टवस्त्रं वृहस्पतिदैवतं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

बहुहेमपात्रदानस्य

भविष्यपुराणे

गैरिकस्य तु पात्राणि दुर्गायै यः प्रयच्छति।

तस्य पुण्यफलं प्रोक्तं तारागणपदं दिवि।।

गैरिकस्य सुवर्णस्य। ॐ अद्य द्युलोकाधिकरणकतारागणपदप्राप्तिकाम एतानि हेमपात्राणि वह्निदैवतानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। शक्त्यपेक्षयात्वल्पवहुत्वविकल्पः। तुल्यमाढ्य दरिद्रयोरितिवाक्यशेषात्।

रजतपात्रदानस्य

निष्ककोटिसहस्रस्य यो दद्याद्वेदपारगे।
दुर्गायाः फलमेवन्तु रजतस्य ततोऽधिकम्।।

रजतस्य पात्ररूपस्य सन्दंशपातात्। ॐ अद्य वेदपारगब्राह्मणसम्प्रदान-कनिष्ककोट्यवच्छिन्नसुवर्णदानजन्यफलाधिकफलप्राप्तिकाम इदं रजतपात्रं चन्द्रदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

ताम्रपात्रदानस्य

हेमपात्राणि यद्दत्वा पुण्यं स्याद्वेदपारगे।
ताम्रपात्रप्रदानेन देव्यै शतगुणं लभेत्।।

ॐ अद्य वेदपारगब्राह्मणसम्प्रदानकतज्जातीयवहुहेमपात्रदानजन्यफल-शतगुणफलप्राप्तिकाम इदं ताम्रपात्रमादित्यदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

**मृण्मयपात्रदानस्य**

ताम्रपात्रप्रदानेन यत्फलं वेदपारगे।
तस्माच्छतगुणं पुण्यं दत्वा मृण्मयमादरात्।।
दुर्गायै प्राप्नुयाद्धीर स्यात्तथा नात्र संशयः।

मृण्मयपात्रमिति शेषः। ॐ अद्य वेदपारगब्राह्मणसम्प्रदानक-ताम्रपात्रदानजन्यफलशतगुणफलप्राप्तिकाम इदं मृण्मयपात्रं प्रजापतिदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

देवीस्नानपूजोपयोगिकलशादिदानस्य

विष्णुधर्म्मोत्तरे

उपस्करप्रदानेन श्रियमाप्नोत्यनुत्तमाम्।

उपस्करः स्नानपूजोपयोगिकलशादिसामग्री। ॐ अद्यानुत्तम-श्रीप्राप्तिकाम एतानि देवीस्नानोपयोगिकलशादिपात्राणि प्रजापतिदैवतानि भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे। देवीपूजोपयोगिपात्रादिदानेप्येतदेव फलम्।

दर्प्पणदानस्य भविष्ये

चन्द्रांशुनिर्म्मलं स्वछन्दर्प्पणं मणिभूषितम्।
पर्य्यन्तशोभितं कृत्वानानामाल्योपलेपनैः।।
दुर्ग्गायाः पुरतो दत्त्वा श्रद्धया परयाऽन्वितः।
राजसूयफलं प्राप्य हंसलोके महीयते।।

हंसलोके सूर्य्यलोके। ॐ अद्य राजसूययज्ञजन्यफलसमफलप्राप्ति-पूर्वकहंसलोकमहितत्वकाम इमं चन्द्रांशुनिर्म्मलमणिभूषितनानामाल्यानुलेप-नोपशोभितपर्य्यन्तदर्प्पणं विष्णुदैवतं पुरतो भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

अथ छत्रदानस्य शिवरहस्ये

दद्याच्च यः परमभक्तियुतो भवान्या
घण्टावितानमथ चामनमातपत्रम्।
केयूरहारमणिकुण्डलभूषितोऽसौ
रत्नाधिपो भवति भूतलचक्रवर्त्ती।।

ॐ अद्य केयूरहारमणिकुण्डलभूषितत्वरत्नाधिपतित्वभूतलचक्र-वर्तित्वकाम इदं छत्रमुत्तानाङ्गिरोदैवतं भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

कनकदण्डधवलच्छत्रदानस्य भविष्ये

शंखकुन्देन्दुसङ्काशं प्रवालमणिभूषितम्।
हेमदण्डमयं छत्रं दुर्गायै यः प्रयच्छति।।
सछत्रेण विचित्रेण किङ्किणीजालमालिना।
धार्य्यमाणेन शिरसिहरलोके महीयते।।

ॐ अद्य विचित्रकिङ्किणीजालमालिमस्तकोपरिधार्य्यमाणछत्रकरणक-हरलोकमहितत्वकाम इदं हेमदण्डमय प्रवालमणिभूषितधवलछत्रमुत्ता-नाङ्गिरोदैवतं भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

विष्णुधर्म्मोत्तरीये छत्रदानस्य

दानं शय्यासनं छत्रं पादुके चाप्युपानहौ।
वाहनङ्गाञ्च धर्मज्ञ त्रिदशेभ्यो ददाति यः।।
एकैकस्मादवाप्नोति वह्निनष्टोमफलं नरः।

दातृवहुत्वापेक्षया सम्प्रदानवहुत्वं। ऊँ अद्य वह्निष्टोमयज्ञजन्यफल-समफलप्राप्तिकाम इदं छत्रमुत्तनाङ्गिरोदैवतं भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

सितच्छत्रदानस्य

राजालिङ्गप्रदानेन राजा च भवतिक्षितौ।

राजलिङ्गम् सितच्छत्रकनकदण्डचामरादि। ऊँ अद्य क्षितिराज्य-प्राप्तिकाम इदं सितच्छत्रमुत्तानाङ्गिरोदैवतं भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

अथ चामरदानस्य

ऊँ अद्य क्षितिराज्यप्राप्तिकाम इदं चामरं वायुदेवतं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

शिवरहस्ये चामरदानस्य

ऊँ अद्य केयूरहारमणिकुण्डलभूषितत्वरत्नाधिपतित्वभूतलचक्रवर्तित्व-काम इदं चामरं वायुदैवतं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

ताम्रदण्डचामरदानस्य भविष्ये

ताम्रदण्डं विचित्रं वै दुर्गायै सम्प्रयच्छति।
संगच्छति परं स्थानं मातृणां लोकपूजितम्।।

ताम्रदण्डं चामरमेव। ऊँ अद्य लोकपूजितमातृगणपरमस्थानगमनकाम इदं ताम्रदण्डविचित्रचामरं वायुदैवतं भगवत्यै दुर्गादिव्यै तुभ्यमहन्ददे।

कनकदण्डचामरदानस्य

रुक्मदण्डविचित्रं यश्चामरं सम्प्रयच्छति।
वायुलोकं समासाद्य क्रीडते वायुना सह।।

ऊँ अद्य वायुलोकप्राप्तिपूर्वकवायुसहक्रीडनकाम इदं कनकदण्ड-

विचित्रचामरं वायुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

सुवर्णमात्रघटितदण्डचामरस्य

सर्वसौवर्णदण्डेन दत्वा चामरमुत्तमम्।
दुर्गादेव्यै नरश्रेष्ठ ब्रह्मलोके महीयते।।

सर्वसौवर्णेन सुवर्णमात्रघटितेन। ॐ अद्य ब्रह्मलोकमहितत्वकाम इदं सर्वसौवर्णदण्डचामरं वायुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

मणिदण्डचामरस्य

आर्य्यायाश्चामरं दत्वा मणिदण्डविभूषितम्।
सुवर्णरौप्यचित्रन्तु दुर्गालोके महीयते।।

ॐ अद्य दुर्गालोकमहितत्वकाम इदं सुवर्णरौप्यचित्रमणिदण्ड-भूषितचामरं वायुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

नानावर्णविचित्रमयूरपक्षव्यजनदानस्य भविष्ये

मयूरपक्षव्यजनं नानावर्णविचित्रितम्।
भगवत्यै नरो दत्वा लभेद्वहु सुवर्णकम्।।

वहुसुवर्णकं वहुसुवर्णसंज्ञकयज्ञविशेषफलमित्यर्थः। ॐ अद्य वहुसुवर्णसंज्ञकयज्ञजन्यफलसमफलप्राप्तिकाम इदं नानावर्णविचित्रित-मयूरपक्षव्यजनं वायुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

विचित्रकर्म्मोपशोभिततालवृन्तदानस्य

तालवृन्तं महावाहो चित्रकर्म्मोपशोभितम्।
भगवत्यै नरो दत्वा वैष्णवस्य फलं लभेत्।

तालवृन्तं व्यजनम्। वैष्णवस्य विष्णुदेवताकयागस्य। ॐ अद्य वैष्णवयागजन्यफलसमफलप्राप्तिकाम इदं विचित्रकर्म्मोपशोभिततालवृन्तं वायुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

घण्टादानस्य

ॐ अद्य केयूरहारमणिकुण्डलभूषितत्वरत्नाधिपतित्वभूतलचक्र-वर्तित्वकाम इमां घण्टां विष्णुदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

## ।। अथ शय्यादानम्।।

तत्र विष्णुधर्म्मोत्तरीयशय्यादानस्य

ऊँ अद्य वह्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम इमां शय्यां विष्णुदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

आदित्यपुराणीयशय्यादानस्य

ये च शय्यां प्रयच्छन्ति देवेषु च गुरुष्विह।
ज्ञानवृद्धेषु विप्रेषु दत्वा नश्यति कण्टकम्।।

देवेष्विति दातृवहुत्वात्संप्रदानबहुत्वम्। ऊँ अद्य कण्टकविनाशकाम इमां शय्यां विष्णुदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

सोपकरणशय्यादानस्य भविष्ये

रक्षोपकरणैर्युक्तां दण्डदारुमयीं शुभाम्।
शय्यान्निवेदयेद्यस्तु भगवत्यै नराधिप।।
दुकूलतूलवस्त्राणां परिसंख्या तु यावती।
तावद्वर्षसहस्राणि दुर्गालोके महीयते।।

ऊँ अद्यैतच्छय्याच्छादनदुकूलतूलवस्त्रसमसंख्यवर्षसहस्रावच्छिन्न-दुर्गालोकमहितत्वकाम इमां सोपकरणां रत्नान्वितां शय्यां विष्णुदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। दुर्गासम्पूज्यदानमिदम्।

शिवरहस्ये वितानकदानस्य

ऊँ अद्य केयूरहारमणिकुण्डलविभूषितत्वरत्नाधिपतित्वभूतल-चक्रवर्तित्वकाम इदं वितानकं वृहस्पतिदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

विष्णुधर्म्मोत्तरीयासनदानस्य

ऊँ अद्य वह्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम इदमासनं विष्णुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

विष्णुधर्म्मोत्तरीयकाष्ठपादुकादानस्य

ऊँ अद्य वह्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम इमे काष्ठपादुके

विष्णुदैवते भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

तत्रैवोपानद्दानस्य

ॐ अद्य वह्निष्टोयज्ञजन्यफलसमफलप्राप्तिकाम इमे उपानहावुत्ता-नाङ्गिरो दैवते भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

तत्रैवाश्वदानस्य

ॐ अद्य वह्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम इममश्वं यमदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। दोलादियानदानेप्येतदेवफलम्।

विष्णुधर्म्मोत्तरीयगोदानस्य

ॐ अद्य वह्निष्टोमयज्ञजन्यफलसमफलप्राप्तिकाम इमां गां रुद्रदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

धेनुगवीदानस्य भविष्ये

योगां पयस्विनीं दद्यात्तरुणीं शीलमण्डनाम्।
भगवत्यैमहाबाहो सोश्वमेधफलं लभेत्।

ॐ अद्याश्वमेधयज्ञजन्यफलसमफलप्राप्तिकाम इमां पयस्विनीं गां रुद्रदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

श्वेतवृषभदानस्य

वृषभं परिपूर्णाङ्गमुदासीनं शशिप्रभम्।
यस्तुदद्यान्नरोभक्त्या भगवत्यै सकृन्नवम्।।
यावन्तिरोमकृपाणिवृषदेहस्थितानि तु।
तावत्कल्पसहस्राणि रुद्रलोके महीयते।।

उदासीनमहिंसम्। शशिप्रभं श्वेतवर्णम्। ॐ अद्यैतद्वृषभदेहस्थित-रोमकूपसमसंख्यबहुकल्पसहस्रावच्छिन्नरुद्रलोकमहित्वकाम इमं श्वेतवृषभं रुद्रदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

दासीदासदानस्य भविष्ये

सुविनीतांस्त्रियं दासीं भृतकं वा नराधिप।

यः प्रयच्छति दुर्गायै तस्य पुण्यफलं शृणु।
राजसूयाश्वमेधानां यत्फलं विन्दते परम्।

ॐ अद्य राजसूयाश्वमेधयज्ञजन्यफलसमफलविशिष्टफलप्राप्तिकाम इमां दासीं प्रजापतिदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। दासदानेप्येतदेव फलम्।

अथ ध्वजदानस्य विष्णुधर्म्मोत्तरे

प्रतिपाद्य तथा भक्त्या ध्वजं त्रिदशवेश्मनि।
निर्णुदत्याशुपापानि महापातकजान्यपि।।

ध्वजश्चामरदर्पण पताकान्वितो दण्डश्चिह्नदण्ड इति प्रसिद्धः।
ॐ अद्य महापातकादि वहुपापक्षयकाम इमं ध्वजं दुर्गावेश्मनिवेशितं शक्रदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

सितध्वजस्य भविष्ये

ध्वजं श्वेतपताकाढ्यमथवापाञ्चराङ्गिकं।
किङ्किणीजालसंवीतं श्वेतपद्मोपशोभितम्।।
दत्त्वादेव्यै महाबाहो शक्रलोके महीयते।

अथवेतिस्वरसात् श्वेतपताकाढ्यत्व पाञ्चरङ्गिकत्वयोर्विकल्पः। किङ्किणीजालसंव्वीतत्वं श्वेतपद्मोपशोभितत्वञ्चनैरपेक्ष्यात् ध्वजमात्र-विशेषणमुभयत्रस सम्बध्यते। पद्मं वस्त्रानिर्म्मितमित्यनिरुद्धः। ॐ अद्य शक्रलोकमहितत्वकाम इमं किङ्किणीजालसंवीतवस्त्रनिर्म्मित श्वेत-पद्मोपशोभित श्वेतपताकान्वितमहाध्वजं शक्रदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

पञ्चवर्णपताकान्वितमहाध्वजस्य

ॐ अद्य शक्रलोकमहितत्वकाम इमं किङ्किणीजालसंवीतवस्त्रनिर्म्मित-श्वेतपद्मोपशोभितपाञ्चरङ्गिकपताकान्वितमहाध्वजं शक्रदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

ध्वजमालायाः

ध्वजमालाकुलं यस्तु कुर्य्याद्वै चण्डिकालयम्।
महाध्वजाष्टकं वापि दिशासु विदिशासु च।।
कल्पानान्तु शतं साग्रं दुर्गालोके महीयते।

दिशासु विदिशासु चण्डिकालयस्यैव सन्निधानादाकांक्षितत्वाच्च। ॐ अद्य साग्रकल्पशतावच्छिन्नदुर्गालोकमहितत्वकाम इमां दुर्गालयनिवेशितां ध्वजमालां शक्रदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

महाध्वजाष्टकस्य

ॐ अद्य साग्रकल्पशतावच्छिन्नदुर्गालोकमहितत्वकाम इमान्दुर्गालयाष्ट-दिङ्निवेशितानष्टौमहाध्वजान् शक्रदैवतान् भगवत्यै दुगदिव्यै तुभ्यमहन्ददे।

**भूमिदानस्य** भविष्ये भूमिदानमुपक्रम्य

यावद्धनूंषिमानेन प्रमीयप्रतिपादिता।
तावद्वर्षसहस्राणि दुर्गालोके महीयते।।

धनुः प्रमाणं पुरुषस्यचतुर्हस्तोदण्डः। ॐ अद्य दातव्यभूमिचतु-र्हस्तमानदण्डसमसंख्यवर्षसहस्रावच्छिन्नदुर्गालोकमहितत्वकाम इयत्संख्य-चतुर्हस्त दण्डमानपरिमितां भूमिं प्रियदत्तां विष्णुदैवतां भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

**धान्यादिसस्यदानस्य** विष्णुधर्म्मोत्तरे

निवेद्यसस्यानितथागतिमाप्नोत्यनुत्तमाम्।

सस्यानिधान्ययवादीनि। ॐ अद्यानुत्तमगतिप्राप्तिकाम एतानि धान्यानि प्रजापतिदैवतानि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे। यवादिदानेप्येतदेव फलम्।

ब्रह्मपुराणादिषु

अतोर्घं पूजनीया सा तस्मिन्नहनिमानवैः।
दीपैरन्नैस्तथाभक्ष्यैः फलैर्म्मूलैश्च धान्यकैः।।
आमिषैर्विविधैः शाकैश्चन्दनेन घृतेन च।
पशुभिः पानकैर्हृद्यैरात्रिजागरणेन च।।

कुंकुमाञ्जनवस्त्रैश्च नितम्बिन्युपयोगिभिः।
लवणालक्तकाभ्याञ्च गुडार्द्रकफलैस्तथा।।
सिन्दूरस्वर्णरत्नानियद्यत्स्त्रीणां विभूषणम्।
निवेदयेद्यथाशक्त्या देव्याः प्रीतिकरं परम्।।

इत्यादिनानावाक्यविहितानि फलमूलधान्यकामिषशाकचन्दन-धृतगुडार्द्रकलवणालक्तकसिन्दूरसुवर्णरत्नरक्तकण्टिकातालङ्कपशुत्रय-हृद्यपानकानि दुर्गाप्रीतिकामनया दैव्यै दद्यात्।।

## ।। अथ छागादिघातनम्।।

देवीपुराणे

पशुघातः प्रकर्त्तव्योगवलाजवधस्तथा।

गवलोमहिषः पशुस्तदन्योमेषादिः।

भविष्ये

दुर्गाया दर्शनं पुण्यं दर्शनादभिवन्दनम्।
वन्दनात् स्पर्शनं श्रेयः स्पर्शनादभिपूजनम्।।
पूजनात्स्नपनं श्रेष्ठं स्नपनात्तर्प्पणं स्मृतम्।
तर्प्पणान्मांसदानन्तु महिषाजनिपातनम्।।

ॐ अद्य श्रीमद्दुर्गादर्शनाभिवन्दनस्पर्शनाभिपूजनस्नपनतर्प्पणजनित-पूर्वपूर्वाधिकपुण्याधिक पुण्यप्राप्तिकाम इमं छागं वह्निनदैवतं महिषव्वाँयमदैवतं भगवत्यै दुगदिव्यै घातयिष्ये। छागादिमांसदानेप्येतदेव फलम्। वहुच्छागादि-घातने प्रतिच्छागं प्रतिमहिषं वेति प्रक्षिप्य वाक्यमितिविशेषः।

भविष्ये

अजानां महिषाणाञ्च मेषाणाञ्च तथा वधात्।
प्रीणयेद्विधिवद्दुर्ग्गां मांसशोणिततर्प्पणैः।।

तत्र वहुच्छागघातनस्य

ॐ अद्यैतावच्छागसमसंख्यकदशवर्षावच्छिन्नदुर्गाप्रीतिकामोहमेता-

ञ्छागान्वह्निदैवतान् भगवत्यै दुर्गादेव्यै घातयिष्ये।

बहुमहिषघातनस्य

ॐ अद्यैतावन्महिषसमसंख्यवर्षशतावच्छिन्नदुर्गाप्रीतिकामोहमेतान् महिषान् यमदेवतान् भगवत्यै दुर्गादेव्यै घातयिष्ये।

बहुमेषघातनस्य

ॐ अद्यैतावन्मेषसमसंख्यवर्षावच्छिन्नदुर्गाप्रीतिकामोहमेतान्मेषान् वरुणदेवतान् भगवत्यै दुर्गादेव्यै घातयिष्ये।

एकमेषघातस्य

ॐ अद्यैकवर्षावच्छिन्नदुर्गाप्रीतिकाम इमं मेषं वरुणदैवतं भगवत्यै दुर्गादेव्यै घातयिष्ये।

## ।। अथ रुधिरादि-मेलकदानस्य।।

भविष्ये

अहन्यहनियोदुर्गां पूजयेद्रुधिरादिभिः।
कुलानां शतमुद्धृत्य ब्रह्मलोके महीयते।।

अहन्यहनिपूजाधिकरणदिनमात्रे। ॐ अद्य स्वकुलशतनरकोद्धरण-पूर्वकब्रह्मलोकमहितत्वकाम एतानि छागरुधिरमांसास्थीनि भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

मेषरुधिरस्य

स्वमेकमेकंवरदा तृप्ता भवति चण्डिका।
रुधिरेणोरणस्येह तर्पिता विधिवन्नृप।।
स्वमेकः सव्वँत्सर इति शतपथश्रुतिः।

उरणस्य मेषस्य।

ॐ अद्यैकवर्षावच्छिन्नदुर्गाप्रीतिकाम इदं मेषरुधिरं विष्णुदेवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

छागरुधिरस्य

अजस्यदशवर्षाणि रुधिरेण सुर्प्पिता।

ॐ अद्य दशवर्षावच्छिन्न दुर्गाप्रीतिकाम इदं छागरुधिरं विष्णुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

महिषरुधिरदानस्य

माहिषेण शतंवीर तृप्ता भवति चण्डिका।

ॐ अद्य वर्षशतावच्छिन्नदुर्गाप्रीतिकाम इदं महिषरुधिरं विष्णुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

स्वभुजादिरुधिरदानस्य

सहस्त्रं तृप्तिमायाति स्वदेहरुधिरेण तु।

तर्प्पिता विधिवद्दुर्ग्गा भित्त्वा बाहू च जंघके।।

ॐ अद्य वर्षसहस्त्रावच्छिन्नदुर्गाप्रीतिकाम एतत् स्वभुजद्वयजङ्घाद्वय-रुधिरं विष्णुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

नरशिरः प्रदानस्य भविष्ये

नारेणशिरसा वीर पूजिताविधिवन्नृप।

तृप्ता भवेद्भृशं दुर्गा वर्षाणां लक्षमेव तु।।

ॐ अद्य लक्षवर्षावच्छिन्नातिशयितदुर्गाप्रीतिकाम इदं नरशिरोविष्णुदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहन्ददे।

।। अथ शिरसाप्रणामस्य।।

भविष्यपुराणे

छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत्।

प्रणम्यशिरसा देवीं स पापैस्तु न लिप्यते।।

ॐ अद्य बहुपापालिप्तत्वकामो भगवत्या दुर्गादेव्याः शिरसा प्रणाममहङ्करिष्ये।

तथा सर्वयज्ञोपवासेषु सर्वतीर्थेषु यत्फलम्।
तत्फलं लभते वीर प्रणम्य शिरसासतीम्।।

ॐ अद्य सर्वयज्ञसर्वोपवाससर्वतीर्थसेवनजन्यफलसमफलकामनया दुर्गादेव्याः शिरसा प्रणाममहङ्करिष्ये।

दण्डवत् प्रणामस्य

संप्रसारित देहो यो दण्डवत्पतितो भुवि।
चण्डिकापुरतोवीर सयाति परमां गतिम्।।

ॐ अद्य परमगतिप्राप्तिकामो भगवत्या दुर्गादेव्याः पुरतो दण्डवत्प्रणाममहङ्करिष्ये।

## ।। अथ स्तुतिफलम्।।

शिवरहस्ये

तपस्तीर्थप्रदानैश्च यज्ञैर्वा बहुदक्षिणैः।
न तां गतिं लभन्तेऽत्र यां स्तुत्वा तु महेश्वरीम्।।

ॐ अद्य तपस्तीर्थप्रदानबहुदक्षिणयज्ञजन्यगत्यधिकगतिप्राप्तिकामो भगवतीं दुर्गादेवीमहं स्तोष्ये।

शिवरहस्ये स्तुतेः

आयुरारोग्यसौख्यानि संपदो दयिताः स्त्रियः।
भवन्ति तस्य यः स्तौति देवीं वासवभैरवीम्।।

ॐ अद्यायुरारोग्यसौख्यबहुसंपद्बहुदयितस्त्रीप्राप्तिकामो भगवतीं दुर्गादेवीमहं स्तोष्ये।

## ।। अथ स्तवः।।

भविष्यपुराणे

चण्डिकां पूजयित्वा तु प्रहृष्टेनान्तरात्मना।
कृताञ्जलिपुटो भूत्वा इदं स्तोत्रमुदीरयेत्।।

ऊँ दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम्।
सर्वलोक-प्रणेत्रीञ्च प्रणमामि सदा शिवाम्।।
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम्।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम्।।
सर्वदेवमयीं देवीं सर्वरोगभयापहाम्।
ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम्।।
विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम्।
योगिनीं योगमाताञ्च चण्डिकां प्रणमाम्यहम्।।
ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम्।
प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम्।।
य इदं पठति स्तोत्रं शृणुयाद्वापि यो नरः।
स मुक्तः सर्वपापैस्तु मोदते दुर्गया सह।।

अथ वरप्रार्थनं शिवरहस्ये

मन्त्रेणानेन वृत्रारे प्रार्थयेत्तां सुरेश्वरीम्।
महिषघ्नि महामाये चामुण्डे मुण्डमालिनि।।
द्रव्यमारोग्यविजयं देहि देवि नमोस्तुते।
भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि।।
देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा।
सर्वमंगलमंगल्ये शिवे सर्वार्थसाधिके।
उमे ब्रह्माणि कौमारि विश्वरूपे प्रसीद मे।।

शिल्पिशास्त्रे

रूपन्देहि यशोदेहि भाग्यं भगवति देहि मे।
पुत्रान्देहि धनन्देहि सर्वान्कामान् प्रदेहि मे।।

इति वरप्रार्थनम्।

चन्दनेन समालब्धे कुंकुमेन विलेपिते।
बिल्वपत्रकृतापीडे दुर्गेऽहं शरणं गतः।।
इत्युच्चार्य पुष्पाञ्जलित्रयेण पूजयेत्। इति देवीपूजाविधिः।

## ।। अथ शस्त्रपूजा।।

ब्रह्मपुराणे
दुर्गागृहे तु शस्त्राणि पूजनीयानि पण्डितैः।
वाद्यभाण्डानिचिह्नानि कवचान्यायुधानि च।।
शस्त्राणि खड्गादीनि चिह्नं ध्वजदण्डः। आयुधानि धनुः प्रभृतानि।

तत्रादौ खड्गपूजा
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः।
श्रीगर्भो विजयश्चैव धर्म्माधारस्तथैव च।।
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा।
नक्षत्रं कृत्तिका ते तु गुरुर्द्देवो महेश्वरः।।
रोहिण्यश्च शरीरन्ते देवतञ्च जनार्द्दनः।
पितापितामहोदेवस्त्वं मां पालय सर्वदा।।
नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः।
भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च।।
इयं येन धृता क्षोणी हतश्च महिषासुरः।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः।।
इति मन्त्रेण ॐ खड्गाय नम इत्यर्घादिभिः खड्गं पूजयेत्।

## ।। अथ छुरिकापूजा।।

ॐ सर्वायुधानां प्रथमं निर्म्मितासि पिनाकिना।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम्।।

चण्डिकायाः प्रदत्तासि सर्वदुष्टनिवर्हिणी।
तया विस्तारिता चासि देवानां प्रतिपादिता।।
सर्वसत्त्वाङ्गभूतासि सर्वाशुभनिबर्हिणी।
क्षुरिके रक्ष मां नित्यं शान्ति यच्छ नमोस्तुते।।
इति मन्त्रेण ऊँ छुरिकायै नम इत्यर्घादिना छुरिकां पूजयेत्।

## ।। अथ कट्टारकपूजा।।

रक्षाङ्गानि गजान् रक्ष रक्ष वाजिबलानि च।
मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते।।
इति मन्त्रेण ऊँ कट्टारकाय नम इति पाद्यादिना कट्टारकं पूजयेत्।

## ।। अथ धनुः पूजा।।

सर्वायुधमहामात्र सर्वदेवारिसूदन।
चाप मां समरे रक्ष साकं शरवरैरिह।।
धृतं कृष्णेन रक्षार्थं संहाराय हरेण च।
त्रयीमूर्त्तिगतन्देवं धनुरस्त्रं नमाम्यहम्।।
इति मन्त्रेण धनुषे नम इत्यर्घगन्धपुष्पादिभिर्धनुः पूजयेत्।।

## ।। अथ कुन्तपूजा।।

प्रास पातय शत्रूँस्त्वमनया लोकमायया।
गृहाण जीवितं तेषां मम सैन्यञ्च रक्ष्यताम्।।
इति मन्त्रेण कुन्ताय नम इत्यर्घगन्धादिना कुन्तं पूजयेत्।।

## ।। अथ वर्म्मपूजा ।।

शर्म्मप्रदं त्वं समरे वर्म्मन् सैन्ये यशोद्यमे।
रक्ष मां रक्षणीयोऽहं तापनेय नमोस्तुते।।
इति मन्त्रेण ऊँ वर्म्मणे नम इति अर्घगन्धादिना वर्म्म पूजयेत्।।

## ।। अथ चामरपूजा ।।

शशाङ्ककरसङ्काशहिमडिण्डीरपाण्डर।
प्रोत्सारय त्वं दुरितं चामरामरवल्लभ।।
इति मन्त्रेण ऊँ चामराय नम इत्यर्घगन्धपुष्पादिना चामरं पूजयेत्।।

## ।। अथ च्छत्रपूजा ।।

यथाम्वुदश्छादयते शिवायेमां वसुन्धराम्।
तथा मां छादयच्छत्र युद्धेऽध्वनिगतं सदा।।
इति मन्त्रेण ऊँ छत्राय नम इत्यर्घगन्धपुष्पादिना छत्रं पूजयेत्।

## ।। अथ ध्वजपूजा ।।

शक्रकेतो महावीर्य्यः सुपर्णस्त्वां समाश्रितः।
पक्षिराजो वैनतेयस्तथा नारायणध्वजः।।
काश्यपेयोमृता हर्ता नागारिर्विष्णुवाहनः।।
अप्रमेयोदुराधर्षो रणे देवारिसूदनः।
गरुत्मान्मारुतगतिस्त्वयिसन्निहितस्थितः।।
साश्ववर्म्मायुधान् योधान् रक्षास्माकं रिपून् दह।
इति मन्त्रेण ऊँ ध्वजाय नम इत्यर्घगन्धपुष्पादिभिर्ध्वजं पूजयेत्।।

## ।। अथ पताकापूजा ।।

हुतभुग्वसवोरुद्रा वायुः सोमोमहर्षयः[1]।
नागकिन्नरगन्धर्वा यक्षभूतमहोरगाः ।।
प्रथमाश्च सहादित्यैर्भूतेशा मातृभिः सहः।
शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ।।
प्रतिहन्तुरिपून्सर्वान्राजाविजयमृच्छतु।
यानि प्रयुक्तान्यरिभिर्द्दूषणानि समन्ततः ।।
निहतानि सदा तानि भवन्तु तव तेजसा।
कालनेमिवधे युद्धे युद्धे त्रिपुरघातने ।।
हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा।
शोभितासि तथैवाद्य शोभस्व समयं स्मर ।।
नीलां रक्तां सितान्दृष्ट्वा नश्यन्त्वाशु भमारयः।

इति मन्त्रेण ॐ पताकायै नम इत्यर्घादिना पताकां पूजयेत् ।।

## ।। अथ दुन्दुभिपूजा ।।

दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः।
भव भूपतिसैन्यानां तथा विजयवर्द्धनः ।।
यथा जीमूतघोषेण हृष्यन्ति वरवारणाः।
तथास्तु तव शब्देन हर्षोस्माकं जयावहः ।।
यथा जीमूतशब्देन स्त्रीणां त्रासोभिजायते।
तथात्र तव शब्देन त्रस्यन्त्वस्मद्विषोरणे ।।

इति मन्त्रेण दुन्दुभये ॐ नम इत्यर्घगन्धपुष्पादिभिर्दुन्दुभिं पूजयेत् ।।

---

१. भूमिप इति पाठान्तरम्।

।। अथ शङ्खपूजा ।।

पुण्यस्त्वं शंखपुण्यानां मंगलानाञ्च मङ्गलम् ।
विष्णुना त्वं धृतोनित्यमतः शान्तिं प्रयच्छ मे ।।

इति मन्त्रेण ॐ शंखाय नम इत्यर्घादिभिः शंखं पूजयेत् ।।

।। अथ सिंहासनपूजा ।।

विजयोजयदोजेता रिपुघाती प्रियङ्करः ।
दुःखहा धर्म्मदः शान्तः सर्वारिष्टविनाशनः ।।
इत्यष्टौ तव नामानि यस्मात्सिंहपराक्रम ।
तेन सिंहासनेति त्वं नाम्ना देवेषु गीयसे ।।
त्वयि स्थितः शिवः साक्षात् त्वयि शक्रः सुरेश्वरः ।
त्वयि स्थितो हरिर्द्देवस्त्वदर्थं तप्यते तपः ।।
नमस्ते सर्वतो भद्र शिवोभव महीपतेः ।
त्रैलोक्यजयसर्वस्व सिंहासन नमोऽस्तु ते ।।

इति मन्त्रेण ॐ सिंहासनाय नम इत्यर्घादिभिः सिंहासनं पूजयेत् ।।

।। अथाश्वपूजा ।।

तुरंगम चिरंजीव परशस्त्रैरलक्षितः ।
सदा मां समरे रक्ष स्वामिकार्य्यं सदा कुरु ।।

इति मन्त्रेण ॐ अश्वाय नम इत्यर्घचन्दनाद्युपचारैर्मुख्यमश्वं पूजयेत् ।।
तुरङ्गपूजायां जलपुष्पाणिविवर्ज्जयेत् । कर्णजापमिमं जपेत् -

ओं गन्धर्वकुलजातोसि मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ।।
तेजसा चैव सूर्य्यस्य मुनीनां तपसा तथा ।
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।।
प्रभावाच्च हुताशस्य वर्द्धस्व त्वं तुरङ्गम् ।

स्मर त्वं राजपुत्रोसि कौस्तुभञ्च मणिं स्मर।।
सुरासुरैर्म्मर्थ्यमानात क्षीरोदादमृतादिभिः।
जात उच्चैःश्रवा पूर्वं तेन जातोऽसि तत्स्मर।।
यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा।
भूम्यर्थेऽनृतवादी चरणे यश्च पराङ्मुखः।।
सूर्य्याचन्द्रमसौ वायुर्य्यावत्पश्यन्ति दुष्कृतम्।
तां गतिं व्रजसि क्षिप्रं तच्च पापं भवेत्तव।।
विकृतिं यदि गच्छेथा युद्धेऽध्वनि तुरङ्गम।
रिपून् विजित्य समरे सह[1] भर्त्रा सुखी भव।।

अथाश्वशुभेंगितं लक्षयेत्। तद्यथा -

यद्यानीतस्तिष्ठेद्दक्षिणचरणं हयः समुत्क्षिप्य।
स जयति तदा नरेन्द्रः शत्रूनचिराद्दिना यस्मात्।।

## ।। अथ बलिदानम्।।

तत्र गोमयोपलिप्तभूभागे माषभक्तबलिमुपादाय एष माषभक्तबलिः ॐ ह्रीं जयन्त्यै नम इत्यादिक्रमेण जयन्त्यै, मङ्गलायै, काल्यै, भद्रकाल्यै, कपालिन्यै, दुर्गायै, क्षमायै, शिवायै, धात्र्यै, स्वधायै, स्वाहायै इत्येकादशभ्यः। उग्रचण्डायै, प्रचण्डायै, चण्डोग्रायै, चण्डनायिकायै, चण्डायै, चण्डवत्यै, चण्डरूपायै, चण्डिकायै इत्यष्टभ्यः। उग्रदंष्ट्रायै, महादंष्ट्रायै, शुभदंष्ट्रायै, करालिन्यै, भीमनेत्रायै, विशालाक्ष्यै, मङ्गलायै, विजयायै, जयायै इति नवभ्यः। मङ्गलायै, नन्दिन्यै, भद्रायै, लक्ष्म्यै, कीर्त्यै, यशस्विन्यै, पुष्ट्यै, मेधायै, शिवायै, साध्व्यै, यशायै, शोभायै, जयायै, धृत्यै, आनन्दायै, सुनन्दायै इतित षोडशभ्यः। अथ ह्रीं मन्त्रं विना विजयायै, मङ्गलायै, भद्रायै, धृत्यै, शान्त्यै, शिवायै, क्षमायै, सिद्ध्यै तुष्ट्यै, उमायै, पुष्ट्यै, श्रियै, ऋद्ध्यै, रत्यै, दीप्तायै, कान्त्यै, यशायै, लक्ष्म्यै, ईश्वर्य्यै, वृद्ध्यै,

---

१. भर्त्रा सह इति पाठान्तरम्।

शाक्र्यै, जयावत्यै, ब्राह्मयै, जयन्त्यै, अपराजितायै, अजितायै, मानस्यै, श्वेतायै, दित्यै, मायायै, महामायायै, मोहिन्यै, रतिलालसायै, तारायै, विमलायै, गौर्यै, शरण्यायै, कौशिक्यै, मत्यै, दुर्गायै, क्रियायै, अरुन्धत्यै, घन्टायै, कर्णायै, कपालिन्यै, रौद्र्यै, काल्यै, मयूर्य्यै, ि्त्रायै, सुरूपायै, बहुरूपायै, रिपुहायै, अम्बिकायै, चर्च्चिकायै, सुरपूजितायै, वैवस्वत्यै, कौमार्य्यै, माहेश्वर्य्यै, वैष्णव्यै, महालक्ष्म्यै, कार्तिक्यै, कौशिक्यै, शिवदूत्यै, चामुण्डायै इति चतुःषष्ठि देवीभ्यो बलिदानम् ।। ततो ब्रह्माण्यै, माहेश्वर्य्यै, कौमार्य्यै, वैष्णव्यै, वाराह्यै, इन्द्राण्यै, चामुण्डायै, महालक्ष्म्यै, चण्डिकायै इत्येवं नवभ्यो बलिमुत्सृजेत् ।

## ।। अथ सामान्यतो बलिदानम् ।।

माषकुल्माषमांसाद्यैर्द्दयो दिक्षु बलिं त्रिशि ।

तत्र मन्त्रः । ऊँ लोकपालग्रहनक्षत्रसुरासुरगणगन्धर्वयक्षराक्षस-विद्याधरगरुडमहोरगकिन्नरगजेन्द्रदेवताप्सरो भूतपिशाचक्रव्यादमनुष्य-मातृगणयोगिनीडाकिनीशाकिनी गणा इमं नानाद्रव्यबलिं गृहणन्तु हूँ स्वाहा इति बलिन्दत्वा ।

ऊँ शिवाः कंकालवेतालाः पूतनाजम्भकादयः ।
ते सर्वे तृप्तिमायान्तु बलिदानेन तोषिता ।।

इति दद्यात् ।

## ।। अथ महाष्टम्यामर्द्धरात्रे विजयकामस्य नृपस्य देवीपूजापूर्वक बलिदानम् ।।

तत्र सर्वोपहारसंपन्नो वस्त्ररत्नफलादिभिः ।
पुष्पैश्च द्रोणबिल्वाम्रजातीपुन्नागचंपकैः ।।

पूर्ववदेवविचित्रां पूजां रचयित्वा दुर्गाग्रतोमूलमन्त्रं यथाशक्ति जपित्वा स्तुत्वा प्रणम्य वरं प्राथ्र्य । कुशतिलजलान्यादाय । ऊँ आश्विनशुक्लाष्टम्या-मर्द्धरात्रे इमं पञ्चाब्दं महिषमजं मेषं वा विजयकामोहं दुर्गादेव्यै घातयिष्ये ।

इति संकल्प्य। खड्गमादाय। ऊँ कालिकालिवज्रेश्वरि लोहदण्डायै नम इति मन्त्रं जपित्वा खड्गेन गन्धपुष्पस्त्रगादिभिरलंकृतं महिषं घातयेत्। तदुत्थाभ्यां रक्तमांसाभ्यां महाकौशिकमन्त्राभिमन्त्रिताभ्यां पूतनादिभ्यो बलिन्दद्यात्।। तत्र क्रमः।। दुर्गागृहस्यनैर्ऋत्यां दिशिपाद्यादिभिरुपचारैः पूतनां संपूज्य रुधिरमांसबलिमुपनीय। ऊँ ह्रीं ऊँ स्फुर २ ऊँ कटु २ गलु २ कृलु २ धुनु २ मारय २ विद्रसवय २ कम्पय २ कम्पावय २ पुरु[1] २ पूरय २ ऊँ ह्रीं ऊँ हूँ भवं हूँ फट् २ मर्द्दय २ ऊँ हूँ ऊँ हूँ इति महाकौशिकमन्त्रमुच्चार्य्य एष रुधिरमांसबलिः। ऊँ पूतनायै नम इति दद्यात्। एवं वायव्यां एष रुधिरमांसबलिः। ऊँ पापराक्षस्यै नमः ऐशान्यां एष रुधिरमांसबलिः। ऊँ विदार्य्यै नम इति दद्यात् एवं पिलिपिञ्जा(ञ्छा)य नमः। ऊँ क्रव्याद्भ्यो नमः। ऊँ जम्भकाय नमः। ऊँ करा(पा)लिने नमः। इति प्रागादि दद्यात्। अथ शत्रुप्रतिमां पिष्टमयीं कृत्वा खड्गेन तच्छिरश्छेदयित्वा। ऊँ स्कन्दाय नम इति शिरः स्कन्दाय दत्वा ऊँ विशाखाय नम इति कबन्धं विशाखय दद्यात्। अथ सचेजः स्नात्वा शुक्लाम्बरधरः सुप्रक्षालितपाणिपादः स्वाचान्तः पुनरर्द्धयामिनीशेषे देवीं पूजयेत्। तत्र विधिः। क्षीरेण घृतेन दध्ना इक्षुरसेन मधुना शर्करया जलेन च प्रत्येकमष्टोत्तरशतपलपरिमितेन धूपदीपान्तरितनानावाद्यघोषैर्मूलमन्त्रेण स्नापयित्वा यवगोधूमलोध्रवल्कलचूर्णैरुष्णोदकसहितै विरूक्ष्य सुखोष्णवारिणा प्रक्षाल्य सुगन्धवारिणा स्नपयेत्। ततः पाद्यार्घाचमनीयादि दत्वा कुंकुमागुरुकर्प्पूरचन्दनान्यादाय मूलमन्त्रमुच्चार्य्य इदमनुलेपनं ऊँ दुर्गादेव्यै नम इत्यनुलिप्य कौशेयादिवस्त्राणि यथाविभवं रत्नानि हेममयानि विभूषणानि ग्रथिताग्रथितानि द्रोणजातीचम्पकादीनि सुरभिपुष्पाणि हेमपुष्पाणि च मूलमन्त्रमुच्चार्य्य ऊँ दुर्गादेव्यै नम इति निवेदयेत्। धूपदीपसुप्रभूतनैवेद्य-मुखवासताम्बूलारात्रिकपादुकोपानच्छत्रचामरव्यजनघन्टावितानयवधान्यादि दद्यात्। ततः प्रणम्य स्तुत्वा छागादिबलिन्दद्यात्।। इत्यार्द्धरात्रिक-दुर्गापूजाविधिः।।

---

१. र

## ।। अथ महाष्टमीमहानवम्योर्न्नवदुर्गापूजाविधिः ।।

तत्र चन्दनकुंकुमादिनाष्टदलकमलमालिख्य। पूर्वदले गोरोचनावर्णा रुद्रचण्डा, आग्नेये अग्निवर्णा प्रचण्डा, याम्ये कृष्णावर्णाचण्डोग्रा, नैर्ऋते नीलवर्णा चण्डनायिका, वारुणे शुक्लवर्णा, चण्डा, वायव्ये, धूम्रवर्णा चण्डवती, सौम्ये पीतवर्णा चण्डरूपा, ईशानेपाण्डररूपा अतिचण्डिका, सर्वाः षोडशभुजा मूर्द्धजखेटकघण्टादर्शधनुर्ध्वज पाशशक्ति युतवाम-हस्तामुद्गरशूलवज्र खड्गाङ्कुशशरचक्रशलाकान्वित दक्षिणकराः। पद्ममध्ये अग्निवर्णोग्रचण्डाष्टादशभुजामूर्द्धजखेटकघण्टादर्शतर्ज्जनीधनुर्ध्वजडमरु-पाशान्वितवामहस्ता शक्तिमुद्गरशूलवज्रखड्गाङ्कुशशरचक्रशलाकान्वित दक्षिणभुजा लीढस्था सिंहोपरिस्थिता महिषशिश्छेदोद्भव खड्गपाणि-दानवकचग्रह दृढमुष्टिका। कान्तपीनस्तनोरुकाः सर्वा एव ध्येयाः स्थाप्याः पूज्याश्च। तत्र क्रमः। सपुष्पाक्षतमादायावाह्य स्थापयित्वा। ॐ ह्रीं दुर्गे दुर्गे रक्षिणि स्वाहेति मन्त्रमुच्चार्य्य। ॐ अग्निवर्णायै उग्रचण्डायै नम इति पाद्यादिभिरुपचारैः पूजयेत्। प्राच्यादिदलेषु ॐ गोरोचनावर्णायै रुद्रचण्डायै नमः ॐ अग्निवर्णायै प्रचण्डायै नमः ॐ कृष्णवर्णायै चण्डोग्रायै नमः ॐ नीलवर्णायै चण्डनायिकायै नमः ॐ शुक्लवर्णायै चण्डायै नमः। ॐ धूम्रवर्णायै चण्डवत्यै नमः। ॐ पीतवर्णायै चण्डरूपायै नमः। ॐ पाण्डररूपायै अतिचण्डिकायै नमः। ततो द्रोणपुष्पबिल्व- पत्रजातीचम्पकादि सुरभिकुसुमैर्म्मूलमन्त्रमुच्चार्य्य देवीमर्च्चयेत्। ततो मध्ये ॐ दुर्गेहृदयाय नमः प्राच्यादिदलेषु ॐ दुर्गे शिरसे नमः। ॐ रक्षिणि शिखायै नमः। ॐ स्वाहाकवचाय नमः। ॐ दुर्गे दुर्गे रक्षिणि स्वाहा अस्त्राय नमः। इति पञ्चाङ्गानि पूजयेत्। देव्या अस्त्राणि सिंहासनञ्च पूजयेत्। स्वस्वदिक्षुदशलोकपालान् तदस्त्राणि व्राह्यादिशक्तीश्च पूजयेत्। यथासंभवं वस्त्ररत्नहेमालङ्करणच्छत्रादीनि तत्तत्कामनया देव्यै दद्यात्। ततोञ्जलिं बद्ध्वा। ॐ दुर्गां शिवां शान्तिकरीमित्यादि स्तोत्रेण स्तुत्वा प्रार्थयेतानेन

